


# श्रीभाष्यम् ।

## श्रीभगवद्रामानुजमुनिप्रणीतम् ।

महामहोपाध्यायसुदर्शनव्यासभट्टप्रणीत-
श्रुतप्रकाशिकायुतम् ।

विषयानुक्रमणी–अधिकरणसारावली–अधिकरणविषय–अधिकरणविषयवाक्यैः सहितः ।

## ( चतुःसूत्रीभागः । )

स च

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीतोताद्रिरामानुजयतीन्द्राज्ञया तच्चरण-
कमलाश्रितश्रीनिवासेन संस्कृत्य मुम्बय्यां निर्णयसागर-
मुद्रणालयेऽङ्कयित्वा प्रकाशितः ।



शाकः १८३८, सन् १९१६.

ELPHINSTONE COLLEGE,
BOMBAY,

*1st February, 1916.*

I have great pleasure in recommending to the Sanskrit public the edition of Râmânuja's Shrî-Bhâshya with the famous commentary Shruta-Prakâshikâ which is being edited by Pandit Shrînivâsa Sharmâ at the Nirṇaya Sagar Press, and the first volume of which containing the first four Sûtras is going to be shortly published. A good edition of Shrî-Bhâshya with Shruta-Prakâshikâ was a long-felt want to the student of Râmânuja, for Shruta-Prakâshikâ is most valuable and absolutely indispensable for the proper study of the great philosopher. I, therefore, heartily congratulate the Pandit on the excellent edition that he is bringing out. Shruta-Prakâshikâ has been published before at Benares many years ago, but the edition is out of print at present and is not well printed and intelligently edited. While lecturing on Shrî-Bhâshya to my Honours Class in this College I often had to refer to the Benares edition of Shruta-Prakâshikâ and I found it a regular task to read the commentary from that unattractive book. Compared with the previous edition of Shruta-Prakâshikâ the one that Pandit Shrînivâsa Sharmâ is publishing at present is immeasurably superior. The Commentary has been most intelligently arranged and punctuated in such a way as to facilitate the work of a student, the Pratîkas from the Bhâshya being printed in bold type. From the few forms which I have carefully read for my Class lectures during the past few days I can safely say that the edition is almost entirely free from the mischiefs of the Printer's Devil. I trust that the first volume containing the first four Sûtras would be of the utmost use to our Honours Students who have to study the first Sûtra for their B. A. Examination. About the printing and the get-up of the book one word is sufficient, *viz.*, that the book is printed at the famous Nirṇaya Sâgar Press here.

I have, however, one or two suggestions to make. I find that the text of the Bhâshya has not been divided in different paragraphs according to the topics dealt with therein. This creates a little difficulty in finding out where we are exactly in Bhâsya and seems to hamper our way a little. The editor, I under-

stand, possesses some manuscripts which he uses for collation. It would have been better if he had given the variants in the foot-notes though the reading of the Shruta-Prakâshîkâ which he has adopted in his edition is the best.

The editor, I am told, has undertaken this arduous task at the command of his Guru though he himself does not possess the sinews of the war sufficient to take him to the end of his enterprise. His difficulties have increased on account of the outbreak of the European conflagration and it would be difficult for him to continue the publication of the book, if the first volume that he is offering to the world does not bring him sufficient money to defray the actual expenses. I, therefore, confidently hope that the public in general, and the student world in particular, would lend to this excellent edition the support which it so richly deserves.

**A. B. Gajendragadkar, M. A.**
*Assistant to the Professor of Sanskrit,*
*Elphinstone College, BOMBAY.*

श्रीमते रामानुजाय नमः ।

## श्रीमत्परमहंसपरिव्राजकाचार्योभयवेदान्तप्रतिष्ठापनाचार्यैः श्रीतोताद्रि(वानमामलै)-भगवद्रामानुजमुनिभिरनुगृहीतेयमनुमोदपत्रिकाः—

महतामोदेन निवेद्यत इदं महामनस्विभ्यस्तत्त्वहितपुरुषार्थजिज्ञासुभ्यो महद्भ्यो भौमेभ्यः सुमनोभ्यः ।—संमतं हि सर्वसमयेष्वात्मज्ञानं निःश्रेयसहेतुरिति । श्रूयते च—'**पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति, आत्मानं चेद्विजानीयात्, तरति शोकमात्मवित्, ब्रह्मविदाप्नोति परम्**' इत्यादिः परावरात्मतत्त्वज्ञानस्यापवर्गसाधनत्वं प्रतिपादयन्वेदान्तवाक्यगणः । तथाप्यनादिनिधनेऽनवरतश्रूयमाणेऽपौरुषेये नित्यनिरवद्ये मातापितृसहस्रेभ्योऽपि वत्सलतरे तत्त्वहितपुरुषार्थावेदकेऽस्मिन्शब्दब्रह्मण्यनिष्णातत्वात्परंब्रह्मानधिगम्यानन्तक्लेशभाजने घोरे संसारसागरे जननमरणात्मकनिमज्जनोन्मज्जनाभ्यां दूयमानानां तीरवृक्षप्राप्त्युपायमजानतामचिदविशेषितानां चेतनानामतिकृपणदशावलोकनेन दयमानमनाः परमकारुणिकः सर्वेश्वरः श्रियःपतिरवाप्तसमस्तकामोऽपि स्वयमेव व्यासरूपेणावतीर्य व्यासीचकार वेदान्सूत्रीचकार च वेदान्तान् । तथा च स्कान्दे व्यक्तमुक्तम्—

"नारायाणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् । किंचित्तदन्यथाभूतं त्रेतायां द्वापरे खिलम् ॥ गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते । सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥ शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ॥ अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम् ॥ चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैव च सहस्रधा ॥ कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥ अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । सविशेषाणि सूत्राणि ह्यपराणि विदो विदुः ॥ मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः । इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥ एवं विधानि सूत्राणि कृत्वा व्यासो महायशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान्क्रीडते परमेश्वरः ॥" इत्यादिना ।

तदेषा संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनी उपनिषद्दुग्दाब्धिमध्योद्धृता पाराशर्यवचःसुधा पूर्वाचार्यसुरक्षिता 'विरुद्धमतयोऽनेके सन्त्यात्मपरमात्मनोः' इति परमगुरुभिर्यामुनमुनिभिरभिहितदिशा बहुमतिव्याघातदूरस्थिता भौमानां सुमनसामनवरतपानाय भवभयाभितप्तजनभागधेयवैभवभावितावतरणेन परमकारुणिकेन भाष्यकारेण निजाक्षरैरेवानीता । अस्या एव सूत्रव्याख्याया भाष्यमिति निर्विशेषितमेव नाम जोघुष्यते नान्येषाम् । 'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषत' इति स्कान्दोक्त्याऽवगम्यतेऽस्यैव सूत्रकृदभिमतार्थप्रतिपादकत्वान्मुख्यत्वम् । किं बहुना पाश्चात्यवाण्यानूदितश्रीभाष्यशांकरभाष्याः निष्पक्षपाता मतान्तरस्था अपि महामतयो महर्षिव्यासाभिमतसूत्रार्थयाथात्म्यज्ञानजनने श्रीभाष्यमेव शरणमिति स्फुटीचक्रुः । एतद्भाष्यकाराणामाप्ततमत्वं '**भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते**, इति प्रतिज्ञानान्महर्षिबोधायनानुसारित्वदर्शनात्स्फुटमवगम्यते । ऋषेरभिप्रायमृषिरेव हि वेत्तुमर्हति; नह्यनृषेः सूक्ष्मदर्शित्वम् । अस्यैव भाष्यकार इति निरुपपदनामश्रवणात् 'मुख्यस्य निर्विशेषेण शब्दोऽयम्' इति वचनं स्मारितं भवति ।

टीकाचेयं षट्त्रिंशत्साहस्री प्रख्यातयशोभिर्वरदगुरुभिः श्रीकाञ्च्यामुपन्यस्यमानाच्छ्रीभाष्यार्थाननिमिषं श्रवणयोर्निपेव्य तथैव व्यलेखि श्रीसुदर्शनव्यासभट्टैरित्यस्याः **श्रुतप्रकाशिके**ति नाम्नैव सुविदितं सर्वेषाम् । अस्याश्च टीकाया एक एवादर्शः सर्वेषां तत्परंपरागतानामाचार्याणां श्रीभाष्यार्थयाथात्म्यज्ञाने शरणमासीत् । कस्मिंश्चित्कलापे श्रीरङ्गमाक्रम्य यवनैरसिभिश्छिद्यमानेषु द्वादशसहस्रसंख्याकेषु भागवतेषु स्वशरीरं तृणायमन्यमानोऽपि श्रीमद्वेंकटनाथार्यः(वेदान्तदेशिकः)स्वगुर्वाज्ञयैतद्रक्षणे दीक्षितो गतासूनां देहानामधश्छन्नो भूत्वैनां पर्यपालयदित्यस्या वाचामगोचरं वैभवं जानतां किमु वक्तव्यम् । मतान्तरस्थेष्वपि 'अनया भाष्यं भाष्यम्' इति जोघुषत्सु किमिवास्याश्छन्नं वैभवम् । अनया च सहितमिदं श्रीभाष्यं बहुधा ग्रन्थान्ध्रलिपिभिर्मुद्रितमपि तल्लिपिज्ञानशून्यानां नोपकारायेति गैर्वाणीभिर्लिपिभिः काश्यां प्राक्पञ्चविंशतिवर्षेभ्यो मुद्रितमासीत् । तदिदमप्यस्पष्टैकाकारलिपिभिरयथावद्विन्यस्तवाक्यसमाप्तिचिह्नं बहुत्र चर्वितचर्वणमङ्कितमिति प्रतीकग्रहणायात्यायासमसहमानानामध्यापकाध्येतृजनानां नोपादेयतममासीत् । एतत्सर्वं कर्णपरंपरयाधिगम्य अस्माभिः श्रीबदरीनारायणचरणकमलसेवार्थे निर्गतैर्मोहमय्यां प्राप्तैस्तत्रत्यास्मच्चरणसंबन्धिनं निर्णयसागरे शास्त्रिवर्गे नियुक्तं श्रीनिवासमवलोक्य जगति प्रख्यात वैभवे श्रीमन्निर्णयसागराङ्कनालये श्रुतप्रकाशिकया युतं श्रीभाष्यमङ्कनीयमित्याज्ञप्तम् । सोऽप्यस्मदाज्ञादैवेन इव प्रेरितः

सम्यक्संस्कृत्य, निधायोचितचिह्नानि वाक्यसमाप्तिषु, प्रतीकानि स्थूलाक्षरैर्व्यक्तीकृत्य च स्वायसैरक्षरैः सुचिक्कणघनपत्रेषु मुद्राप्य चतुःसूत्र्यन्तं भागं ग्राहकाणां सुग्रहणाय प्रकटीचकार। अयमेव भागः स्वतन्त्रतया तत्रतत्र वेदान्तकलाशालास्वध्याप्यतेऽधीयते परीक्ष्यते च। बहुसंकटेऽप्यस्मिन्काले‌ऽनल्पवित्तव्ययेन मुद्राप्य प्रकाशितवन्तमकिंचनमिमं जनमेतत्परिश्रमविदो मनीषिणोऽनुपदमेव ग्राहकीभूयैतादृशैव सरण्याऽपरस्यापि भागस्य मुद्रणप्रकाशनादिषूत्सुकं कुर्युरित्याशास्महेतराम्।

**रामानुजन्।**

ता. २२ फेब्रुवरी सन् १९१६. } अयोध्या, कनकभुवनम्।

---

**श्रीः।**

चिदचिच्छरीरकपरमात्मस्वरूपैक्यसिद्धान्तसर्वस्वं **भगवत्पादश्रीमद्रामानुजाचार्य**विरचितं बादरायणसूत्रभाष्यं भगवत्स्वरूपमिव श्रीयुतमेव सर्वदा विराजतीति **श्रीभाष्य**मपि तन्नाम्नाऽलंकुर्वाणं यथार्थमेवेति सर्वविदितमिदं नोपपादनमपेक्षते। तदिदमतिप्रसन्नं संक्षिप्तविस्तृतपूर्वोत्तरकल्पादिनिरूपणशैल्या स्थूणानिखननन्यायेन सर्वमपि शास्त्रार्थं यथावदिव श्रावयदुपबृंहयच्छ्रु**तप्रकाशिका**ख्यानमपि व्याख्यानं तदर्थमधिजिगमिषूणामत्यन्तोपकारकमितीदमवचनसिद्धमेव। तदिदमुभयमपि काशीनगरमुद्रितमपि प्रमाददूषितं विद्यते इति, **मान्यमान्यगजेन्द्रगडकर**महाशयाशयेनात्र प्रकटितेन स्फुटमेव प्रकाशते। तदत्र महता संरम्भेण महतां पण्डितवर्याणामास्तिकवर्याणां च साहाय्यं प्रतीक्ष्य श्रुतप्रकाशिकासहितश्रीभाष्याङ्कनप्रकाशनाद्यर्थं कृतदीक्षान् समीचीनयाऽऽधुनिकसाधारण्येन सर्वहृदयंगमया सरण्या जगतीतलप्रथित**निर्णयसागर**मुद्रणालये तदङ्कनप्रकाशनादिकमारचयतः पण्डितवर्यश्रीनिवासशर्मणो हस्तावलम्बयन्तु सर्वेऽपीति भगवन्तं रमारमणं प्रार्थयामि। इति—

१५।८।१६
निर्णयसागर प्रेस—**बंबई.** }

**वेदान्तविशारदः अनन्तकृष्णशास्त्री,**
**मीमांसोपाध्यायः, तिरुपती.**



श्रीरस्तु ।

# श्रीभाष्यभूमिका ।

श्रियःकान्ताय नमः ॥

श्रीमते विष्वक्सेनाय नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

श्रीमन्नारायणांशावतारभूतो भगवान् **बादरायणो** जैनबौद्धादिवेदबाह्यमतानि—वैदिकानामेव महर्षीणां केषांचिद्वेदान्तविचारप्रवृत्तानां यथावस्थितवेदान्ततात्पर्यानुकूलानि परस्परविरुद्धानि सर्ववेदान्तप्रत्ययन्यायेन सर्ववेदान्तैककण्ठ्यकरणविधुराणि च मतानि निरस्य यथावस्थितवेदान्ततात्पर्यगर्भितं सर्ववेदान्तैककण्ठ्यकरणगर्भितं **सूत्ररूपं शारीरकमीमांसाशास्त्रं** प्रणिनाय ॥१॥ तदपि शास्त्रमर्वाचीनाः शंकरभास्करयादवाद्याः केचन यथावस्थिततदर्थजातमनवधारयन्तः स्वोत्प्रेक्षामात्रेण स्वस्वाभिनिवेशवशंवदचेतसोऽन्यथैव व्याकुर्वन्तो व्याकुलीचक्रुः ॥ २ ॥ ततो लोकरक्षैकदीक्षपरमकारुणिकभगवन्नारायणप्रचोदित **आदिशेषावतारभूतो** भगवान् **श्रीमद्रामानुजमहामुनि**रुक्तार्वाचीनशंकरादिकृततद्विपरीतव्याख्यानानि परःसहस्रानुपपत्तिप्रदर्शनेन निरस्य यथावस्थितशारीरकमीमांसातात्पर्यगर्भं सर्ववेदान्तैककण्ठ्यनिरूपणगर्भं श्रीभाष्यं नाम शारीरकमीमांसाशास्त्रव्याख्यानं सर्वार्थसामरस्यगर्भं सूत्राक्षरानुगुणं प्राचीनबोधायनटङ्कद्रमिडगुहदेवादिमहर्षिव्याख्यानानुगुणं च प्राणैषीत् ॥ ३ ॥ श्रीभगवद्रामानुजमुनिः किल काश्मीरदेशस्थसरस्वतीपीठस्थलगमनदशायां सरस्वत्या कप्यासश्रुत्यर्थपरीक्षणपूर्वकं तद्योग्यतामभिवीक्ष्य—भवत एव भाष्यकरणयोग्यताऽस्ति—**भाष्यकारसंज्ञापि** भवत एव युक्ता—अतः शारीरकमीमांसाशास्त्रस्य भाष्यं त्वं कुरु—विपरीतार्थकरणादन्येषां न तादृशसंज्ञा युक्तेति दत्त**भाष्यकारसंज्ञः** पश्चादेव श्रीभाष्यं चकारेति प्रसिद्धम् ॥ ४ ॥ पक्षान्तरानुपपत्तयस्तावदिह किंचित्प्रदर्श्यन्ते प्रेक्षावतां मनस्तुष्ट्यर्थम् ॥ ५ ॥ **शाङ्करपक्षे**—जगतो मिथ्यात्वाभ्युपगमात्—तन्नास्तीत्येव सिद्धम् । ब्रह्मणोऽपि निर्विशेषत्वाभ्युपगमात्—ब्रह्मास्तीत्युक्तौ—अस्तित्वरूपविशेषवत्त्वप्रसङ्गभिया तथाकथनासंभवे—तदपि नास्तीत्येव सिद्धम् । एवंनिर्गुणत्वेनाभ्युपगतस्य ब्रह्मणस्तदनुभवितुर्मुक्तस्य चावाङ्मनसगोचरानवधिकातिशयानन्दवत्त्वं श्रुतिभिर्जोघुष्यमाणं कथमुपपद्येत ? न खलु पाषाणस्य केवलस्य तदनुभवितुर्वाऽवाङ्मनसगोचरानवधिकातिशयानन्दवत्त्वं सुमन्दधियापि केनचित्सुवचम्—तस्माच्छांकरा वेदवादच्छद्मप्रच्छन्नं बौद्धभावं दुरपह्नवमेव भजन्त इति विवेकिभिः सर्वैः सुगमम् ॥६॥ **भास्करपक्षे**—जगतः सत्यत्वाभ्युपगमेऽप्यचिदात्मनोर्द्वयोरेव तत्त्वयोरभ्युपगमादात्मनोऽच्छेद्यवस्तुत्वाच्चोपाधिभेदेऽपि सर्वत्रावस्थितस्यात्मन एकत्वेन सकलसंसारिजीवात्मानुभूयमानाध्यात्मिकादितापत्रयादिलक्षणसर्वदोषाकरत्वस्य ब्रह्मण्येव प्रसङ्गात्—निरस्तनिखिलदोषत्वसमस्तकल्याणगुणाकरत्वयोर्ब्रह्मणि सर्वत्र श्रुतिस्मृतिभिर्जोघुष्यमाणयोरनुपपत्त्या सर्वशास्त्रविरोधोऽपि दुर्वारः । किंच—शरीरलक्षणोपाध्यवच्छिन्नब्रह्मण एव जीवात्मरूपत्वस्वीकारात्—ब्रह्मणो विभुत्वेन गमनागमनाभावात्—शरीरसंसर्गविमोकयोरेव बन्धमोक्षरूपत्वाच्च शरीरगमनागमनदशायां प्रतिक्षणं बन्धमोक्षप्रसङ्गोऽपि दुर्वारः । अपिच—आत्मभेदानङ्गीकारेण बद्धमुक्तविभागासंभवान्मुक्तस्यैव पुनःपुनर्बद्धत्वसंभवाच्च मुक्तस्य पुनरावृत्त्यभावशास्त्रविरोधोऽपि दुर्वारः । एवमितस्ततः शरीरापगमदशायां घटाद्यपगमदशायामाकाशस्य पूर्वदेशावच्छेदेन तत्संयोगविमोकवच्छरीरसंयोगवि-

मोकसंभवान्मोक्षः सुगम एवेति तदर्थं ब्रह्मविद्याद्यनुष्ठानानावश्यकत्वेन तद्विधायकवेदान्तशास्त्राद्यानर्थक्यप्रसङ्गोऽपि दुर्वार एव। तस्माद्भास्करपक्षोऽप्यनुपपन्न एव ॥ ७ ॥ यादवपक्षे—ब्रह्मण एकस्यैव चिदचिल्लक्षणसर्वजगद्रूपेण परिणामाङ्गीकारात्सविकारत्वसकलहेयदोषाकरत्वयोर्ब्रह्मण्येव स्वीकाराच्च—ब्रह्मणो निर्विकारत्वनिरस्तनिखिलदोषत्वसमस्तकल्याणगुणाकरत्वादिप्रतिपादकसर्वशास्त्रविरोधेनेतो जघन्यो न कश्चित्पक्षः ॥ ८ ॥

किंच—प्रतिकल्पं ब्रह्मणैव संकल्पपूर्वकं बहुभवनस्वीकारस्य श्रुतिसिद्धत्वाद्बहुभवनदशायां सकलदुःखाकरत्वस्य ब्रह्मण्येव संभवाच्च ब्रह्मणः सर्वलोकसर्वशास्त्रविरुद्धस्वानर्थैकप्रवृत्तिस्वीकारप्रसङ्गो हि दुरपह्नव एव पक्षत्रयेऽपि ॥ ९ ॥ नहि कश्चित्सुमन्दमतिरपि स्वमस्तक एव महाप्रस्तरप्रपतनप्रसङ्गानुकूलं व्यापारं कुर्यात् ॥ १० ॥ एवं प्रतिकल्पं सृष्टिदशायां बन्धस्य महाप्रलयदशायां मुक्तेश्च स्वत एव संभवान्मोक्षार्थं ब्रह्मविद्याध्ययनादिविधाननैरर्थक्यप्रसङ्गः पक्षत्रयेऽपि तुल्ययोगक्षेम एव ॥ ११ ॥ अत्र केचित्स्वमतस्वरूपयाथात्म्यज्ञानविधुराः पूर्वोत्तरमीमांसयोरैकशास्त्र्यं नास्ति—किंतु भिन्नशास्त्रत्वमेवेति वदन्ति ॥ १२ ॥ तत्त्वविवेकविलसितमेव—शास्तीति शास्त्रमिति व्युत्पन्नस्य शास्त्रशब्दस्य शासनज्ञापकत्वप्रवृत्तिनिमित्तकत्वात्—शासनस्येशेशितव्यरूपचेतनयोर्द्वयोरीशचेतनकर्तृकेशितव्यचेतनकर्मकनियमनरूपत्वात्—एतन्मते चेशेशितव्यरूपचेतनद्वयस्यैवानङ्गीकारेण शास्त्रशब्दार्थस्यैव गगनकुसुमायमानत्वाच्च शास्त्रशब्दार्थसद्भावमङ्गीकृत्य तत्र द्वयोरैकशास्त्र्यप्रतिषेधपूर्वकं भिन्नशास्त्रत्वकथनस्यातिमुग्धजल्पितत्वात् ॥१३॥ प्रपञ्चसत्यत्वस्वतःसिद्धजीवेश्वरभेदवाद्यास्तिकमतेतु शास्त्रप्रसिद्धिरैकशास्त्र्यं च सर्वं सुनिरूपम् ॥ १४ ॥ अक्षरराशिरूपशास्त्रस्य स्वरूपत एकत्वासंभवात्साक्षात्परंपरया वैकपरमफलोद्देश्यकप्रवृत्तिजनकशास्त्रत्वस्य वैकग्रन्थव्याख्यानरूपत्वस्य वैकशास्त्रत्वरूपताया वक्तव्यत्वात्—सर्वकर्मणां तत्तदवान्तरफलाभिसन्धित्यागपूर्वकमनुष्ठितानां ज्ञानजनकतायाः, ज्ञानस्य मोक्षजनकतायाश्च शास्त्रेणैव सिद्धत्वात्—कर्मपरपूर्वमीमांसाशास्त्रस्य परविद्यापरोत्तरमीमांसाशास्त्रस्य च साक्षात्परम्परया मोक्षरूपैकपरमफलजनकतायाः संभवाद्वेदरूपैकशास्त्रव्याख्यानरूपत्वाच्च तयोर्द्वयोः शास्त्रयोरैकशास्त्रत्वं सुगममेव ह्यास्तिकमते ॥ १५ ॥ तदिदं स्पष्टमेव निरूपितं श्रीभाष्यश्रुतप्रकाशिकयोः ॥ १६ ॥ तस्मादास्तिकाभासकल्पितमुक्तमतत्रयमसमञ्जसमेव ॥ १७ ॥

**भगवद्रामानुजमुनयस्तू**क्तपक्षत्रये दर्शितानुपपत्तिप्रभृतिपरःसहस्रानुपपत्तिजालं प्रदर्शयन्तः शारीरकमीमांसातात्पर्यं बोधायनादिमहर्षिप्रदर्शितसरण्या यथावदवधार्य प्रागुक्तशंकरादिपक्षनिरसनपूर्वकं यथावस्थितवेदान्तशास्त्रतात्पर्यगर्भान् **वेदार्थसङ्ग्रह-वेदान्तसार-श्रीभाष्य-वेदान्तदीप-गीताभाष्यादिग्रन्थांश्चक्रुः** ॥ १८ ॥ **शंकरादयो हि**—'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्म' इत्यादिवेदान्तशास्त्रगतसमानाधिकरणनिर्देशतात्पर्यं यथावदनवधार्य स्वोत्प्रेक्षामात्रेण जीवात्मपरमात्मनोः स्वरूपैक्यमेव ततो निखिलं तदनुगुणं व्याकुर्वन्त एव कृत्स्नं शारीरकमीमांसाशास्त्रं वेदान्तजालं च व्याकुलीचक्रुः ॥ १९ ॥ श्रीभाष्यकृतस्तु बोधायनादिमहर्षितात्पर्यमनुसृत्य तदनुगुणमेव व्याख्यानादनुपपत्तिसम्पर्कलेशविधुरं शारीरकमीमांसाशास्त्रं वेदान्तशास्त्रं च समञ्जसमेव विवव्रुः ॥ २० ॥ तथाहि—सूत्रकारेण **भगवता बादरायणेन**—'नेतरोऽनुपपत्तेः' ( १। १ । १७ ) 'अनुपपत्तेस्तु न शारीरः' ( १।२।३ ) 'नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च' ( १ । २ । २० )' उभयेऽपि हि भेदेनैनमधीयते' ( १।२।२१ ) 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' ( १।२। २३ ) 'भेदव्यपदेशात्' ( १।३।४ ) 'इतरपरामर्शात्स इति चेन्नासंभवात्' ( १।३।१७ ) 'सुषुप्त्युत्क्रान्त्योर्भेदेन'

( १ । ३ । ४३ ) 'अधिकं तु भेदनिर्देशात्' ( २ । १ । २२ ) 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' ( ३ । ४ । ८ ) इत्यादिसूत्रेषु जीवात्मपरमात्मनोः स्वरूपतो भेदस्यैवासकृदनेकस्थलेषु स्पष्टं निर्देशात्—तद्विरोधेन चेतनाचेतनयोः स्वरूपाभेदस्य सुतरामेवासंभवेन च—'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( २ । १ । १५ ) इत्यधिकरणे तदभिप्रायेणैव नामरूपव्याकरणश्रुत्या स्थूलचिदचिद्विशिष्टब्रह्मण एव कार्यभूतजगद्रूपतां सूक्ष्मचिदचिद्विशिष्टब्रह्मण एवोपादानकारणतां चाभिसन्धायैव जगद्ब्रह्मणोः कार्यकारणभूतयोरनुप्रवेशनिबन्धनशरीरशरीरिभावलक्षणतादात्म्येनैवानन्यत्वसमर्थनात्—'तत्त्वमसि श्वेतकेतो' ( ६।६।७ ) इति छान्दोग्यश्रुतौ—'सन्मूलाः सोम्येमाः सदायतनाः सत्प्रतिष्ठा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति प्रथमं कार्यकारणभावनिबन्धनशरीरात्मभावलक्षणतादात्म्यस्यैव सामानाधिकरण्यनिर्देशबीजतां प्रदर्श्यैव—तत्त्वमसीति तत्त्वंपदयोः परमात्मजीवात्मपरयोः सामानाधिकरण्येन निर्देशात्—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' ( ३ । १४ । १ ) इति छान्दोग्यश्रुतावपि—सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यनिर्देशस्य—तज्जलानित्यनेन प्रागुक्तरीत्या कार्यकारणभावनिबन्धनशरीरशरीरिभावलक्षणतादात्म्यमूलकताया एव प्रदर्शनात्—'तत्सृष्ट्वा—तदेवानुप्राविशत्—तदनुप्रविश्य—सच्च त्यच्चाभवत्' ( २ । ६ ) इति तैत्तिरीयकोपनिषद्यपि—सच्च त्यच्चाभवदिति सामानाधिकरण्यनिर्देशस्य तत्तदनुप्रवेशमूलशरीरशरीरिभावलक्षणतादात्म्यनिबन्धनताया एव प्रदर्शनात्—प्रायशः सर्वत्रेत्थमेव—परमात्मनः जीवात्माचेतनयोश्च सामानाधिकरण्यनिर्देशानां तत्र तत्रैव शरीरशरीरिभावलक्षणतादात्म्यनिबन्धनताया एव प्रदर्शनात्—स्वरूपैक्यनिबन्धनताया दुर्वचत्वाच्च परमात्मजीवात्माचेतनानां त्रयाणामपि तत्त्वानां स्वरूपतो भिन्नत्वं तत्रापि जीवात्मनामणुत्वं च स्वाभाविकमेवानुसन्धाय तदनुगुणमेव व्याख्यानात्प्रागुक्तपक्षान्तरोक्तदोषाणां स्वपक्षे संभवस्यैवानवकाशेन तादृशदोषप्रसङ्गलेशविधुरं सुसमञ्जसमेव श्रीभाष्यादिग्रन्थजातं भगवान् **श्रीरामानुजमुनिः** प्रणिनाय ॥ २१ ॥ परस्परविरुद्धप्राचीनमहर्षिमतनिरसनपूर्वकं भगवद्बादरायणविरचितशारीरकमीमांसाशास्त्रस्याप्यर्वाचीनैः प्राचीनमहर्षिव्याख्यानान्यननुसृत्य स्वकपोलकल्पनाभिरन्यथाव्याख्याय व्याकुलीकरणवत्स्वकृतशारीरकमीमांसाशास्त्रव्याख्यानभूत**श्रीभाष्यग्रन्थ**स्याप्यर्वाचीनैरन्यथाव्याख्याय व्याकुलीकरणप्रसङ्गभिया **सुदर्शनभट्टार्य** नाम मितज्ञमेव कञ्चित्स्वानुग्रहेणामितज्ञानं कृत्वा तस्मा अपि स्वानुप्रविष्टवात्स्यवरदार्यमुखेन स्वीयश्रीभाष्यादिग्रन्थतात्पर्याणि स्वयमेवोपदिश्य तन्मुखेन स्वकपोलकल्पनावैधुर्यज्ञापक**श्रुतप्रकाशिका**संज्ञालंकृतां प्राचीनाचार्यमुखश्रुतानामेवार्थानां सम्यङ्निरूपणगर्भां व्यख्यां सुविपुलामारचय्य प्रख्यापयामास **भगवान् श्रीभाष्यकार** एवेति, ततश्च सुदर्शनभट्टाचार्यविरचितां श्रुतप्रकाशिकाभिख्यां श्रीभाष्यव्याख्यां श्रीरङ्गनाथगोष्ठ्यां श्रीरङ्गनाथनियमनेनैव श्रावितामाकर्ण्य **श्रीरङ्गनाथो** व्याख्यानिरूपणवैखरीवैलक्षण्यश्रवणपरितुष्टमनाः—ध्रुवमपरो **व्यास** एवायमिति सुदर्शनभट्टार्यस्य व्याससंज्ञामपि ददाविति च प्रख्यातमेव सर्वत इदमैतिह्यम् ॥ २२ ॥ तस्माच्छ्री**भाष्यश्रुतप्रकाशिका**विवृतशारीरकमीमांसाशास्त्रसिद्धान्त एव पारमार्थिक इति विमत्सरा विद्वांसो विदांकुर्वन्तु ॥ २३ ॥ इतरपक्षेषु चान्या अप्यनुपपत्तयोऽनेकविधाः श्रीभाष्यकारादिभिर्दर्शिताः श्रीभाष्यादिष्वेव द्रष्टव्याः ॥ २४ ॥ अर्वाचीनपक्षान्तराण्यपि श्रीभाष्यकारादिप्रदर्शितानुपपत्तिभिरेव प्रतिहतानि दृश्यन्ते ॥ २५ ॥ तस्मात्सांसारिकतापत्रयातुरैर्मुमुक्षुभिर्निर्मत्सरैरवश्यमस्मिन्नेव जन्मनि स्वोज्जीवनकामैरिदमेव सादरमाश्रयणीयमित्यलं बहुना ॥ २६ ॥

श्रीशैलानन्तपुरुषसिंहासनपदाश्रितः । श्रीरङ्गसूरिर्व्यातानीदिमां श्रीभाष्यभूमिकाम् ॥ २७ ॥

**समाप्ता चेयं भूमिका ।**

॥ श्रीः ॥

# श्रुतप्रकाशिकाविषयानुक्रमणी ।

इति श्रुतप्रकाशिकाविषयानुक्रमणी समाप्ता ।

श्रीमते रामानुजाय नमः ॥

# अधिकरणसारावली ।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

स्वस्ति श्रीरङ्गभर्तुः किमपि दधदहं शासनं तत्प्रसत्त्यै सत्यैकालम्बि भाष्यं यतिपतिकथितं शश्वदध्याप्य युक्तान् ।
विश्वस्मिन्नामरूपाण्यनुविहितवता तेन देवेन दत्तां वेदान्ताचार्यसंज्ञामवहितबहुविल्साथमन्वर्थयामि ॥ १
श्रीमद्ध्यां स्यादसावित्यनुपधि वरदाचार्यरामानुजाभ्यां सम्यग्दृष्टेन सर्वं सहनिशितधिया वेङ्कटेशेन क्लृप्तः ।
सेव्योऽसौ शान्तचित्तैः श्रवणरसनया शान्तिलाभार्थिभिर्वा सिद्धः शारीरकार्थे सहजबहुगुणःस्रग्धरादुग्धराशिः ॥ २
त्र्यन्तस्वान्तवादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ मन्दत्वासङ्गतत्वे विशयमफलतां मानबाधं च मन्तॄन् ।
दिङ्मोहक्षोभदीनान् दिनकरकिरणश्रेणिकेवोज्जिहाना हृद्या पद्यावलीयं हृदयमधिगता सावधानान्धिनोतु ॥ ३
गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयं दिङ्मात्रं दर्शयन्नप्यहमिह निपुणैः श्राध्वमध्यक्षणीयः ।
मा भून्निःशेषसिद्धिस्तदपि गुणविदः स्फीतनिःसीमरत्ने मध्येहारं निधेयं महति जहति किं मौक्तिकं लब्धमब्धौ ॥ ४
वेदार्थन्यायचिन्त्ये प्रथममधिगतः कर्मवर्गः प्रमाणैः भेदैरङ्गैः प्रयुक्त्या क्रमविरचनयाऽथाधिकृत्याऽतिदिष्ट्या ।
तत्राशेषैर्विशेषैस्तदनु तदनुवर्त्यूहतः प्राप्तबाधैः तन्त्रेणाथ प्रसक्त्या तत उपरि चतुर्लक्षणी देवतार्था ॥ ५
प्राग्धर्मेऽल्पास्थिरार्थे प्रशमितविशये तादृशाराध्ययुक्तेऽथातःशारीरकांशे बहुविधमहिम ब्रह्म मीमांसितव्यम् ।
कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुद्ध्यैव कर्म त्यक्त्वाऽऽदौ ब्रह्मचिन्तां किमिति न कुरुतां तन्न तुल्योक्त्यबाधात् ॥ ६
प्राबण्यं प्राक्त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौ स्याच्च मुख्यक्रमेण ।
मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात्पदार्थो दृष्टान्तश्चोपमेयाद्यदि मधु सविधे यातु चाद्रिं किमर्थः ॥ ७
व्याचख्युः केऽपि तापत्रयहतिमितरे साधनानां चतुष्कं काण्डेऽस्मिन् पूर्ववृत्तं कथयति निगमः कर्मचिन्ताफलं तत् ।
साङ्गाधीतिर्हि सूते विशयमवसरः क्वात्र तन्त्रान्तरादेरौचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः ॥ ८
नित्यप्राप्तस्य कण्ठस्थितकनकनयान्निर्विशेषस्य लब्धिर्मिथ्याभूतं निवर्त्यं श्रुतिशकलभुवः प्रेक्षणात्तन्निवृत्तिः ।
कर्मैवं क्वोपयुक्तं प्रतिभटमपि तद्वृत्ततोक्तिर्मदुक्ते प्राप्तात्रेति प्रलापे प्रतिवचनगतिर्भाषिता विस्तरेण ॥ ९
मीमांसायाः कबन्धं कतिचन जगृहू राहुकल्पं शिरोऽन्ये किन्त्वैरन्तर्विरोधप्रमुषितमतिभिर्बाह्यकल्पैर्भ्रमद्भिः ।
स्वाध्यायाध्यायकार्त्स्न्ये स्वविधिपरविधिप्रेरणा तावदास्तां कृत्स्नापातप्रतीतौ किमिति कृतधियः कृत्स्नचिन्तां न कुर्युः ॥
प्राधीतस्यैकरूपप्रयतननियतादेकरूपोपकाराद्विद्यास्थानैक्यसिद्धौ क्रमनियतियुताकाङ्क्ष्यैकप्रबन्ध्यम् ।
अध्यायादिष्विवावान्तरविषयफलाद्यन्यताऽत्राप्यभेत्री तत्तुल्यः कर्तृभेदः कलिबलकलुषैः कल्पितोऽर्थे विरोधः ॥ ११
तत्तद्वैशिष्ट्यभेदाद्यदगणि भिदुरा देवता पूर्वभागे संज्ञावैषम्यमात्रादपि कथमियताऽधीतयष्टव्यभङ्गः ।
उद्देश्याकारभेदोऽस्त्ययमिह हविषामुक्तिभिन्ने प्रयोगे दौर्बल्यं त्वक्षवेद्यान्मितिचरमतया द्रव्यतो देवतायाः ॥ १२
जैमिन्युक्तं विरुद्धं यदिह बहुविधं दर्शितं सूत्रकारैस्तस्मादत्रैकशास्त्र्यं हठकृतमिति न ब्रह्मसंवाददार्ढ्यात् ।
तन्नस्तात्पर्यभेदैर्विहतिपरिहृतिः काण्डवत्काण्डयोः स्याद्वाह्यक्षेपार्थगूढाशयवचनभवभ्रान्तिशान्त्यादिसिद्धेः ॥ १३
आक्षिप्य स्थापनीयाः कतिचिदिह नयाः पूर्वकाण्डप्रणीताः केचिद्व्युत्पादनीयाः क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्य ।
इत्थं सर्वत्र चिन्ताक्रम इति समतां वीक्ष्य मध्यस्थदृष्ट्या शास्त्रैक्ये पौनरुक्त्यप्रभृतिपरिहृतिः सावधानैर्विभाव्या ॥ १४
वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्याय्युपात्ता सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्तिः ।
अत्र ब्रूमः सदुक्तौ न वयमिह मुधा बाधितुं किंचिदर्हा निर्वाहस्तूपचारात् क्वचिदिह घटते ह्येकतात्पर्ययोगः ॥ १५
सौत्री सङ्ख्या शुभाशीरधिकृतिगणना चिन्मयी ब्रह्मकाण्डे तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या ।
अक्षोर्म्यांशाहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्वर्यक्षैरक्षैः प्रयाजैरिह भवति रसैः पादनीतिप्रबन्धः ॥ १६
शास्त्रं त्वेतत्समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानैरध्यायैः षोडशाङ्घ्रिद्विकयुगभिदुरं षट्कभेदादिनीत्या ।
तत्राद्यं वक्ति सिद्धं विषयमपि परन्तत्प्रतिद्वन्द्वियुग्मं स्वप्राप्तेः साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम् ॥ १७
तत्राद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः पश्चात्स्मृत्यादिकैरक्षतिरहितहतिः कार्यताभ्रेन्द्रियादेः ।
दोषादोषौ तृतीये भवभृदितरयोर्भक्तिरङ्गानि चाथोपासारोहप्रभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि ॥ १८
स्रष्टा देही स्वनिष्ठो निरवधिमहिमापास्तबाधश्रितात्मः स्वात्मादेरिन्द्रियादेरुचितजननकृत्संसृतौ तन्त्रवाही ।
निर्दोषत्वादिरस्यो बहुभजनपदं स्वार्हकर्मप्रसाद्यः पापच्छिद्ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चात्र वेद्यः ॥ १९

विध्युक्त्याऽधीत्य वेदान्विधिबलविरतावन्यजादेव रागात् कृत्स्नं मीमांसमानाः क्रमत इति परब्रह्मचिन्तां तरन्ति ।
प्राप्ते तुर्ये युगेऽस्मिन् परिमितबलधीप्राणतद्विन्नदृष्ट्या कालक्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते ॥ २०
रागान्मीमांसते चेत् स्वयमिह यततां किं गुरूक्त्येतिचेन्न ब्रह्मज्ञानाप्तये गुर्वभिगमनविधेस्तेन तत्त्वोपदेशात् ।
सद्विद्याचार्यवत्त्वे प्रथयति च परब्रह्मवित्तिं तथान्याप्याचार्यादित्यधीते नियमविधिरसौ निश्चितो नीतिविद्भिः ॥ २१
सिद्धे व्युत्पत्तिराद्या न भवति न च धीलक्षणाद्युज्यतेऽस्मिन् किं शास्त्रेणान्यसिद्धे न च निशमयितुः सिद्धबोधे फलं स्यात् ।
ब्रह्मण्येवं न मानान्युपनिषद इति स्तम्भिते तद्विचारे शास्त्रारम्भं चतुःसूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः ॥ २२
सिद्धे व्युत्पत्त्यभावे स्वरिव फलतया लक्ष्मभङ्गे च लभ्यं ब्रह्मान्योक्त्यानुमानप्रमितमपि भवत्वंशतः शास्त्रवेद्यम् ।
विध्यर्थत्वेऽप्यबाधात्परविषयवचः स्वार्थमानं भवेदित्यन्वारुह्योक्तिदैन्यं न हि सहत ऋजुः सूत्रकृद्वावदूकः ॥ २३
द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन् द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः ।
औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयं शास्त्रारम्भार्थमेकं त्रितयमपि परं शास्त्रमित्याहुरेके ॥ २४
यत्तत्सेनेश्वरार्यैरगणि वकुलभृत्किङ्करैरङ्ग्यकारि व्यासार्यैर्न्यासि च द्विः श्रुतमिति विशदं विष्णुचित्तैर्विवव्रे ।
अश्रौषं शेषकल्पादहमपि विदुषो वादिहंसाम्बुवाहादद्धा निर्द्धार्यतेऽतश्चतुरधिकरणी ब्रह्मचिन्तोपयुक्ता ॥ २५
व्युत्क्रम्यात्राद्यतुर्यावभिदधति नयौ केचिदप्राप्तमेतत् बोधासिद्धौ कथं तत्फलमिह विमृशेत् सिद्धवत्कारमाम्र्यात् ।
मध्यौ द्वौ रूपनामप्रजननविषयौ यद्विदुस्तच्च मन्दं सत्युक्तेऽपेक्षितेऽर्थे विफलविभजनं नोचितं नीतिसूत्रे ॥ २६

इति शास्त्रावतारः ॥

---

## अथ जिज्ञासाधिकरणम् ॥ १ ॥

कार्ये व्युत्पत्तिराद्या नियतमिति गिरस्तत्परा एव सर्वा नान्या वेदेऽपि नीतिस्तत उपनिषदामूषरप्रायतैव ।
नातस्तद्वेद्यमीमांसनमुचितमिति प्रत्यवस्थीयमाने सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् ब्रह्म जिज्ञास्यमाह ॥ २७
अङ्गुल्या निर्दिशन्तः किमपिकिमपि तद्वाचकांशैः प्रयुक्तैर्बालान् व्युत्पादयन्ति क्रमभवमिलितज्ञापकत्वं विदन्तः ।
सङ्घातास्ते पदानां विदधति च धियं क्वापि सिद्धे विशिष्टे कर्तव्ये क्वापि चेति क्वचिदिह नियतिः शब्दशक्तेर्न कल्प्या ॥
संसारेऽनादिसिद्धे मुहुरनुभवतः संचिताः संस्क्रियाः स्युः संस्कारोद्बोधकाश्च स्वयमुपनिपतन्त्यप्रकम्प्यात्प्रवाहात् ।
तत्तज्जातीयभेदग्रहणसमुचिता वृत्तयस्तन्निदानास्तद्वत्स्याच्छिक्षकादिव्यवहृतिषु शिशोरैदमर्थ्यादिबोधः ॥ २९
दक्षैराधोरणाद्यैरनुमितविविधस्वप्रयासोपयोगैः शिक्षाभेदा विचित्रा गजविहगमुखान् ग्राहयद्भिः प्रयुक्ताः ।
तस्मात्सार्थो मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः कल्पो भाव्योदितो यत्र यदि कथमसौ कल्पतेऽन्योऽपि मार्गः ॥
कस्मैचित्सिद्धमर्थं कमपि कथयितुं चेष्टया चोद्यमानस्तस्मै तं वक्ति तद्धीसमविषयतया शिक्षते तद्वचोऽन्यः ।
आदिष्टो बोधनार्थं यदिह वितनुते तत्तदर्थं हि युक्तं तद्वाक्यात्सिद्धवेदी प्रयतत इति चेदस्त्वनादेशिकं तत् ॥ ३१
पुत्रस्तेऽभून्न सर्पोऽयमिति वचनतः प्रीत्यभीत्यादिलिङ्गैस्तद्योग्यार्थं तदूह्यं विषयनियतिरासक्तिपूर्वैः क्वचित्स्यात् ।
आवापोद्वापभेदात् प्रतिपदनियता शक्तिरप्यत्र सिद्धोन्नेयोदृष्ट्यादिसाहाय्यकमिह वचसः कार्यपक्षाविशिष्टम् ॥ ३२
कार्ये व्युत्पत्तिराद्या भवतु तदपि किं शक्तितात्पर्यसिद्धेः प्राग्व्युत्पत्तिः क्रियायां नृवचसि निगमे त्वन्यथेत्यभ्युपैषि ।
स्थाप्याऽतोऽनन्यथासिद्ध्यनुगमनियतैः सत्प्रयोगैर्हि शक्तिः कोऽसौ पाञ्चाल इत्याद्युचितविरतिकं सिद्धमात्रेऽपि वाक्यम् ॥
दुःखासंभिन्नदेशप्रभृतिफलतया चोदनास्वेव सिद्धं श्रौतत्वादार्थवादिक्यपि भवति फलं रात्रिसत्रे प्रतिष्ठा ।
अङ्गीकुर्मो निषेधानुगुणमिति तथाऽनर्थकृत्त्वं निषेध्ये विध्यर्थैरप्यतः स्यादवितथविषया ब्रह्मधीरर्थवादैः ॥ ३४

इति जिज्ञासाधिकरणम् ॥ १ ॥

---

## अथ जन्माद्यधिकरणम् ॥ २ ॥

जन्माद्यैश्चेद्विशेष्यं भवति बहुलताथोपलक्ष्यं ब्रवीषि ज्ञाताज्ञातादिदौःस्थ्यं व्यतिषजति न चालक्षिते स्यात्परीक्षा ।
उद्दिष्टब्रह्मचिन्ता तत इह कथमित्यत्र हेतुस्त्वलक्ष्यः पुंसूक्तादिप्रसिद्धो गुणनिधिरवजिद्ब्रह्मशब्दार्थ उक्तः ॥ ३५
नाना चेल्लक्षणानि स्वरसभिदुरता ब्रह्मणि स्याद्विशेष्ये खण्डो मुण्डश्च गौरित्यभिलपनसमा धर्मिशब्दैकताऽत्र ।
तेष्वेकं चेद्यथाऽन्यत्समुदितमफलं स्याद्यवच्छेद्यहानेः खण्डत्वादिक्रमाचेत्यसदविहतितः खण्डतादेर्विशेषात् ॥ ३६
तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नान्यबाधि व्याघातः कालभेदान्न भवति जननस्थापनध्वंसनानाम् ।
प्रत्येकं लक्षणत्वं सुवचमिहबहूदाहृतिर्धीमहिम्ने संभूयाप्याहुरेके फलमपि च तदाशङ्किताथव्युदासः ॥ ३७

ज्ञातं चेन्नोपलक्ष्यं नच यदि नतरां लक्ष्मयोगाप्रतीतेर्ज्ञाताज्ञातांशभेदस्त्विह दुरभिलंपो लक्षणेनैव वेद्ये।
ब्रह्मत्वं ब्रह्मशब्दान्वितिरपि विदितेऽन्यत्र नोचेन्न शङ्का मैवं नानागमोद्यद्विशयशमनतः श्रीमति ब्रह्मतोक्तेः ॥ ३८
यावल्लक्ष्यावबोधं यदवगतिरतो लक्षणात्तद्विशेष्यं यस्याबोधेऽपि पश्चाद्यदवगतिरिदं स्यात्कुतो नोपलक्ष्यम् ।
तस्माद्द्वेधापि भाष्येऽनुमतिरनुचितेत्याशयाज्ञस्य चोद्यं मोक्षार्थोपास्यभेदे ह्युभयमपि समन्वेति विद्याविकल्पात् ॥ ३९
चन्द्रे शाखेव शान्ते महसि तदगतं लक्षणं कारणत्वं सत्यज्ञानादिवाक्यैरपमृदितगुणं तद्विभातीति डिम्भाः ।
एकत्रार्थो विशेष्ये प्रतिपदनियतावर्ज्यतत्तन्निमित्तद्वारावृत्तिं पदानामिह विदुररुणाद्युक्तिवन्न्यायवृद्धाः ॥ ४०

इति जन्माद्यधिकरणम् ॥ २ ॥

---

## अथ शास्त्रयोन्यधिकरणम् ॥ ३ ॥

वीतावीतप्रयोगक्रमनियतिमती कार्यता विश्वमेतत् सर्वज्ञेन प्रक्लृप्तं गमयति विकलस्त्वत्र शास्त्रैर्विचारः ।
इत्युन्नीतौ लघुत्वादनुमितिवशतः कर्मजैश्वर्ययुक्तो विश्वामित्रादिनीत्या स्फुरति विभुमिहासूत्रयच्छास्त्रवेद्यम् ॥ ४१
क्षित्याद्यं कार्यताद्यैः कटकमकुटवत् कर्तृपूर्वं स कर्ता सिद्ध्येदत्राण्वदृष्टप्रभृतिजनकदृक् सर्वशक्तिश्च मैवम् ।
श्रोत्राद्यैः सौरभादिग्रहणरुचिरियं तादृशव्याप्त्यभावात्सर्वं हेतुं न पश्येत् घटकृदिह न चाकर्तृता तावताऽस्य ॥ ४२
कार्यत्वात् स्याद्विवादास्पदमिदमखिलं सर्ववित्कर्तृपूर्वं यन्नैवं तद्धि नैवं पुरुषवदिति नानन्यथासिद्ध्यभावात् ।
हेतावेतादृशात्मन्यविदुरभिदुरं व्यासिसिद्ध्यादिदौःस्थ्यं तद्भङ्गे लक्षणानामगणि गमनिका तत्त्वमुक्ताकलापे ॥ ४३
यद्यप्यात्मान्तरादेरनुमितिरनघा लिङ्गभेदैस्तथाऽपि प्रत्यक्षव्याप्तिशैली न खलु शिथिलिता कुत्रचित्पक्षभेदे ।
आम्नाये त्वद्भुतोक्तिर्न भवति वितथा तादृशाप्तोक्तनीत्या बाधाभावादिसाम्याद्विहतिमति भवेल्लोकवत् गौणतादिः ॥ ४४
नन्वाम्नायप्रधानाः क्वचिदनुकथयन्त्यस्मदादेरशक्यः कार्यैः कर्ताऽनुमेयः पर इति तदभिप्रैतु जन्मादिवाक्यम् ।
तस्मादीशानुमानत्यजनमनुचितं वैदिकस्येति चेन्न क्वाप्यौचित्योपदेशाद्यत इति च सदाद्युक्तिसिद्धानुवादात् ॥ ४५

इति शास्त्रयोन्यधिकरणम् ॥ ३ ॥

---

## अथ समन्वयाधिकरणम् ॥ ४ ॥

कर्तव्ये ह्यर्थ उक्ते निशमयितृफलं सिद्धरूपे तु न स्यात् प्रीत्या साफल्यक्लृप्तौ वितथमपि वचः किं न दृष्टं तदर्थम् ।
विद्यार्थत्वेऽन्यदृष्टेर्विषयवदनृतं तत् परीक्ष्यन्न भावीत्याक्षेपेऽनन्यशेषे निरवधिकसुखे शास्त्रतात्पर्यमाह ॥ ४६
तात्पर्यं ब्रह्मतत्त्वेऽप्यविहतविधिनाऽप्येकवाक्यत्वपक्षे भेदेऽपि स्यादसिद्धेर्न भवति बलिभुग्दन्तसंख्योक्तिसाम्यम् ।
स्वादार्थत्वं मृषात्वक्षममिति न मृषेत्यूहने प्रीत्ययोगाद्बालोपच्छन्दनादिष्वपि विषयतथाभावबुद्ध्यैव हर्षः ॥ ४७
यत्प्रीत्यर्थं वचस्तन्निखिलमनृतमित्यर्भकप्रायवाक्यं सत्योक्त्यानन्ददृष्टेर्न च विहतिरिहाध्यक्षतः शास्त्रतो वा ।
तेनानन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन त्रय्यन्ताः सत्यनित्याद्भुतपरमपरब्रह्मनिष्ठाः प्रमाणम् ॥ ४८
ब्रह्मैके निष्प्रपञ्चीकरणविधिपदं ध्यानविध्यर्थमन्ये निर्धर्माद्वैतवाक्योपचरितमितरे सिध्यतीति ब्रुवन्ति ।
तेषामेषां स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पाः कल्पोऽयं बाह्यकल्पः कृतमतिपरिषत्पीठमर्दैरमर्दि ॥ ४९
अन्यार्थो ह्यर्थवादः स्तुतिमुखमुखतः स्थापितः प्रागिदानीं स्वातन्त्र्येण प्रमाणीक्रियत इति ततः काण्डयोः स्याद्विरोधः ।
न स्यात्सामान्यतो हि प्रथमसभिदधे मानतास्थापनार्थं केषांचित्स्वार्थतोक्ता स्वत इह सुभगे बोधमात्रात्पुमर्थे ॥ ५०
त्रेधा सर्वत्र वेदे नियतविभजने चोदनाद्यंशभेदैश्चत्वारोऽप्यर्थवादा मुनिभिरभिहिता ब्राह्मणांशस्य शेषाः ।
अत्रातच्छेषतोक्तौ स्मृतिहतिरिति चेद्विद्धि दत्तोत्तरं तत् सामान्योक्तिर्हि सेयं तत उपरि यथामन्त्रविध्यन्यतोक्तिः ॥ ५१
आम्नातैरैहिकार्थैरविगुणसफलैः शाकुनज्यौतिषाद्यैः पारत्रिक्या प्रवृत्त्याऽप्यतिनिपुणधियामागमाश्वाससिद्धौ ।
शब्दे तस्माच्च बोधे सति परविषये दोषबाधव्यपेते मानं तत्र स्वतोऽसौ न कथमितरथा नैगमाध्वापलापः ॥ ५२
शास्त्रारम्भोपपत्त्यै चतुरधिकरणीपेटिकेयं प्रवृत्ता लक्ष्यस्योक्तं विशेषद्वयमिह घटते वक्ष्यमाणोपजीवि ।
सद्ब्रह्माद्युक्तिवेद्याः पर इति हि वदेत्कारणत्वाधिकारे वक्ष्यत्यस्य द्विलिङ्गाद्यधिकृतिषु पुनस्तादृशानन्दतादीन् ॥ ५३
आत्मन्येवं परस्मिन्न कृत इति सिते विश्वहेतुत्वलक्ष्ये शास्त्रैकस्थापनीये निरुपधिपरमप्रेमयोग्ये प्रसक्ते ।
ईदृक्त्वं स्याद्यथार्हं प्रकृतिपुरुषयोर्नानुमानाद्ययोग्यौ दुःखास्पृष्टौ च तावित्यथ परकथनं दोषवीति क्रमेण ॥ ५४

इति समन्वयाधिकरणम् ॥ ४ ॥

---

# अधिकरणविषयाः ।

## (१) जिज्ञासाधिकरणे—

वृद्धव्यवहारादन्यत्राद्यव्युत्पत्त्यसंभवात्, व्यवहारे च कार्यपरतयैव व्युत्पत्तेः, सर्वशब्दानां कार्यार्थबोधकतया सिद्धवस्तुबोधनासंभवात्—सिद्धरूपे ब्रह्मणि वेदान्तानां प्रामाण्यं नास्तीत्यप्रामाणिकमिदं ब्रह्मविचाररूपं शास्त्रमनारम्भणीयमित्याशङ्क्य, अम्बादिशब्दानामङ्गुलिनिर्देशपूर्वकबहुप्रयोगेण सिद्धव्युत्पत्तिः संभवतीति वृद्धव्यवहारादन्यत्रापि शब्दानामाद्यव्युत्पत्तिसंभवात् 'पिता ते सुखमास्त' इत्यादिवृद्धव्यवहारे च सिद्धव्युत्पत्तिसंभवात्—शब्दानां सिद्धवस्तुबोधनसामर्थ्यात्—वेदान्तवाक्यानां सिद्धरूपे ब्रह्मणि प्रामाण्यमस्तीति—तद्विचाररूपशास्त्रमारम्भणीयमित्युक्तम् ।

## (२) जन्माद्यधिकरणे—

यद्यपि परिनिष्पन्नवस्तुबोधनशक्तिरस्ति, तथापि लक्षणतः प्रतिपन्नस्यैव शब्दबोध्यत्वात्—विशेषणानां विशेष्यभेदकत्वेन जगज्जन्मादीनां विशेषणतया ब्रह्मलक्षणत्वासंभवात्—पूर्वप्रतिपन्नाकारान्तरासंभवेन तेषामुपलक्षणतया तदसंभवाच्च—ब्रह्म न वेदान्तवेद्यमित्याशङ्क्य, अविरुद्धविशेषणानां विशेष्याभेदकत्वेन सार्वज्ञ्यादेः पूर्वप्रतिपन्नाकारान्तरस्य संभवेन च जन्मादीनां विशेषणतया उपलक्षणतया च ब्रह्मलक्षणत्वसंभवेन—ब्रह्म वेदान्तवेद्यमित्युक्तम् ।

## (३) शास्त्रयोनित्वाधिकरणे—

यद्यपि ब्रह्म लक्षणतः प्रतिपत्तुं शक्यं, तथापि कारणभूतस्य ब्रह्मणोऽनुमानवेद्यत्वेन प्रमाणान्तरागोचरस्यैव शास्त्रवेद्यत्वेन—ब्रह्म न वेदान्तवेद्यमित्याशङ्क्य सामान्यतो दृष्टानुमानस्य जीवविलक्षणविषयत्वाभावेन—ब्रह्मणः प्रमाणान्तरागोचरत्वेन—ब्रह्म वेदान्तवेद्यमित्युक्तम् ।

## (४) समन्वयाधिकरणे—

यद्यपि प्रमाणान्तरागोचरं ब्रह्म, तथापि ब्रह्मणः प्रवृत्तिनिवृत्तिरूपत्वाभावेन प्रयोजनरूपत्वाभावात्—शास्त्रप्रमाणकत्वं न संभवतीत्याशङ्क्य, सिद्धरूपस्याप्यनवधिकातिशयानन्दरूपतया निरतिशयपुरुषार्थत्वात्—ब्रह्मणः शास्त्रप्रमाणकत्वं संभवतीत्युक्तम् ।

इत्यधिकरणविषयाः ।



# अधिकरणविषयवाक्यानि—

(१) जिज्ञासाधिकरणे— ” ”

(२) जन्माद्यधिकरणे—

यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । ( तै. ३।१।१ )

(३) शास्त्रयोनित्वाधिकरणे— ” ”

(४) समन्वयाधिकरणे—

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः । ( ई. ८ )

अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे । यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । ( के. ३।१।१ )

इत्यधिकरणविषयवाक्यानि ।





## श्रीनिवासाय नमः ।

# श्रीभाष्यम् ।

## श्रुतप्रकाशिकायुतम् ।

अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन्शेमुषी भक्तिरूपा ॥ १ ॥

## श्रुतप्रकाशिका

यतीन्द्रकृतभाष्यार्था यद्व्याख्यानेन दर्शिताः । वरं सुदर्शनार्यं तं वन्दे कूरकुलाधिपम् ॥
वरदं द्विरदाद्रीशं श्रीनिधिं करुणानिधिम् । शरण्यं शरणं यामि प्रणतार्तिहरं हरिम् ॥ १ ॥
बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम् । येनाव्याहतसंकल्पं वस्तु लक्ष्मीधरं विदुः ॥ २ ॥
सम्यङ्न्यायकलापेन महता भारतेन च । उपबृंहितवेदाय नमो व्यासाय विष्णवे ॥ ३ ॥
तस्मै रामानुजार्याय नमः परमयोगिने । यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ ४ ॥
वन्देहं वैरदार्यं तं वत्साभिजनभूषणम् । भाष्यामृतप्रदानाद्यः संजीवयति मामपि ॥ ५ ॥
प्रपद्ये प्रणवाकारं भाष्यं रङ्गमिवापरम् । परस्य ब्रह्मणो यत्र शेषित्वं स्फुटमीक्ष्यते ॥ ६ ॥
श्रुत्यन्तेषु श्रुतं भाष्ये मतं ध्यातं हृदम्बुजे । लक्ष्मीपतिं प्रपद्येहं दृष्टं श्रीरङ्गधामनि ॥ ७ ॥
प्रमाणं च प्रमेयं च प्रमातारश्च सात्त्विकाः । जयन्तु क्षपितारिष्टं सह सर्वत्र सर्वदा ॥ ८ ॥
अविस्तृताः सुगम्भीरा रामानुजमुनेर्गिरः । दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥ ९ ॥
श्रीरङ्गेशाज्ञया लब्धव्याससंज्ञं सुदर्शनम् । वाचाविजयिनः पुत्रं भाष्यभक्तिरचूचुदत् ॥ १० ॥
गुरुभ्योर्थः श्रुतः शब्दैस्तत्प्रयुक्तैश्च योजितः । सौकर्याय बुभुत्सूनां संकलय्य प्रकाश्यते ॥ ११ ॥
कः कृत्स्नं वेत्ति भाष्यार्थं श्रुतांशस्थितये कृतिः । आढ्यैः काकणिकेवैषा नोपेक्ष्या भाष्यवित्तमैः ॥ १२ ॥
भाष्यं चेद्व्यवृणोत्स्वयं यतिपतिर्व्याख्यानवाचां तथा गाम्भीर्यादनवस्थितिर्मितमतिर्दूरे जनस्तद्गिराम् ।
प्रष्टव्यः कथमीश्वरः स हि न नः प्रत्यक्षरूपो दृशां तद्भाष्यं स च भाष्यकृत्स च हरिः सम्यक्प्रसीदन्तु नः ॥१३॥

सर्वेषां पुरुषाणां प्रमाणाधीनप्रमेयनिश्चयानामुपादित्सितजिहासितेष्टानिष्टतत्साधनानामलौकिकपुरुषार्थतत्साधनरूपे वस्तुनि शब्दैकसमधिगम्ये, तत्राप्यपुरुषशेमुषीदोषमषीमालिन्यस्य वेदाख्याक्षरराशेरेव प्रधानतरप्रमाणतयाऽऽश्रयणीयत्वे सिद्धे, तत्र च पशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकामुष्मिकार्वाचीनफलतत्साधनपरेऽवगते पूर्वभागे, परमपुरुषार्थतत्साधनावबोधके च तदुपरिभागे, पूर्वाचार्याभिमतमुक्तिघण्टापथकण्टकायमानविविधकुदृष्टिजनदुर्वचनशतोपप्लुते, तदुपदर्शितकुपथप्रवृत्तिनि जगति च मोमुह्यमाने, तदुज्जिजीवयिषया सदसद्विवेचनचतुरपूर्वाचार्यपरिचितं प्राचीनमेव समीचीनमध्वानं निष्कण्टकीकृत्य परमपुरुषार्थाभ्यर्थिजनसार्थं कृतार्थयितुं भवभयाभितप्तजनभागधेयवैभवभाविताववतरणेन परमकारुणिकेन भगवता भाष्यकारेण शारीरकशास्त्रं व्याचिख्यासितम् । परमर्षिप्रणीतानि व्याख्येयानि तेषां च महर्षिप्रणीतानि व्याख्यानानि च सन्ति चेत्तान्येवानुरोद्धव्यानि; नह्यनृषेः सूक्ष्मदर्शित्वम् । ऋषेरभिप्रायमृषिरेव च स्वतो वेदितुमर्हति न तु जडमतिरितरो जनः ॥ ऋषिवचसामे-

१ अयं श्लोकः श्रुतप्रकाशिकाकारविषयो तच्छिष्यैरेतदादावनुसन्धीयते । २ वत्सकुलोद्भववैरदार्यैः रामानुजार्यशिष्याग्रणीभिरुपन्यस्तभाष्यार्थान्श्रुत्वा प्रकाशितवानिति बोध्यम् । अत एवेयं श्रुतप्रकाशिकेति कथ्यते ।

वाभिन्नवक्तृकाणां मिथो विरोधे पूर्वपक्षाभिप्रायवैभववादादिभिरविरोधो नेयः, भिन्नवक्तृकाणां तु विरोधे दुष्परिहरे युक्तियुक्तं ग्राह्यमिति न दोषः । ये पुनः सन्त्यपि तान्यनादृत्य व्याख्येयान्तराणि व्याख्यानान्तराणि च तद्विरुद्धानि रचयन्ति, तेषामाग्रहगृहीतहृदयत्वे, पण्डितमानित्वे, पाण्डित्यख्यापनपरत्वे च तत्प्रवृत्तिरेव प्रमाणम् । इतरेषां च व्याख्यातृणामार्षव्याख्यानातिलङ्घित्वम्–'उपासात्रैविध्यात्, सर्वत्र प्रसिद्धोपदेशात्, भूमा संप्रसादादध्युपदेशात्, दहर उत्तरेभ्य' इत्यादिषु स्पष्टतरम्, इह तु वृत्त्यनुसारः प्रतिज्ञातः । नच–तत्प्रतिज्ञानमहृदय–मिति शङ्कनीयं; दुष्परिहरबाधकानुपलम्भात् । यद्यपि कर्ममीमांसायां क्वचित्क्वचिदर्वाचीनैर्व्याख्यातृभिराकुलत्वमापादितं, तथापि तत्र प्रयोगमार्गे स्खलनाभावादनुष्ठानमात्राधीनायाः स्वर्गादिफलसिद्धेर्देवतास्वरूपतद्याथात्म्यसत्कार्यवादादिज्ञाननैरपेक्ष्यं, परमपुरुषार्थस्य च ज्ञानैकसाध्यतया ज्ञानमार्गस्खलनस्यात्महानिफलकत्वेन तद्विपरीतज्ञानानामवश्यपरिहर्तव्यत्वम्, उत्तरभागे च तत्तदर्थौपयिकतया प्रसक्तानां पूर्वभागार्थानां प्रदर्शितयैव दिशानुक्तानामपि शिक्षणीयार्थान्तराणां सुकरनिर्वाहत्वं चाभिप्रेत्य ब्रह्मसूत्राण्येव भगवान् भाष्यकारः प्रारभते विवरीतुम् ॥ **एवं** प्रारिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपं मङ्गलं श्रौतमाचरति—**अखिलेत्यादिना** । 'मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न विद्यत' इति हि स्मर्यते, आचर्यते च तत्तत्प्रबन्धृभिः । श्रोतृमनःसमाधानार्थं शास्त्रार्थसंक्षेपश्चार्थतः क्रियते; यथा चोदनासूत्रेण धर्मस्वरूपं प्रमाणं च श्रुत्यर्थाभ्यां निरूपितम् । प्रसिद्धं हि श्रोतुः प्रतिपत्तिसौकर्याय वक्तुरर्थप्रतिपादनस्य संक्षेपपूर्वकत्वम् 'इष्टं हि विदुषां लोके समासव्यासधारण' मिति । शास्त्रार्थसंक्षेपेण वस्तुनिर्देशो, **भवत्वि**त्याशीर्वादश्च कृतौ भवतः । **विनतेति भक्तिरूपे**ति च ब्रह्मणि प्रह्वीभावावगमात् प्रणतिरपि फलिता; 'णमु प्रह्वत्वे' इति हि धातुः । एवं त्रिविधं मङ्गलमाचरितं भवति ॥ श्लोकस्य प्रथमपादेन पूर्वस्याध्यायद्विकस्यार्थः संक्षिप्तः, द्वितीयेन तूत्तरद्विकस्य । कर्ममीमांसायां प्रतिपाद्यभेदेन षट्कभेदवदत्रापि विषयविषयिरूपप्रतिपाद्यभेदेन द्विकभेदः । शास्त्रप्रतिपाद्यमुपायोपेयात्मकम् । सिद्धोपाय उपेयंच ब्रह्म । साध्योपायो भक्तिः । तत्र सप्तम्यन्तैः पदैः सिद्धोपायरूपमुपेयंच ब्रह्मोच्यते । भवतीति भुवनं कार्यवर्गः । रूढिशक्त्या तत्कारणस्य कुलालादेर्व्यावृत्तिः; भुवनशब्दो हि विपुलतरकार्यविशेषे रूढः । अखिलशब्देन सर्वदेशसर्वकालवर्तीन्यण्डजातानि विवक्षितानि, तेन ब्रह्मादिव्यावृत्तिः । खिलं नास्तीत्यखिलम् । कार्येषु ब्रह्मणः सृष्ट्यादिव्यापाराविषयभूतं न किंचिदस्तीत्यर्थः । अनया व्यतिरेकोक्त्या प्रायिकत्वनिवृत्तिः 'अज्ञातं नास्ति ते किंचि' दितिवत् । अतः सकलमित्यन्वयमुखेनानुक्तिः । **अ**कारोपक्रमत्वसिद्धये निखिलेत्यनुक्तिः । '**अ** इति भगवतो नारायणस्य प्रथमाभिधानं, भगवतो वाचकमकारं प्रयुञ्जानेन किन्नाम मङ्गलं न कृत' मिति चाभियुक्तैरभ्यधायि । अत्र भगवद्वाचित्वाविवक्षायामपि भगवद्वाचकत्वशक्तियोगादकारो माङ्गलिकः; 'अइउण्' इत्यत्राकारवत् । नञो निषेधवाचित्वेपि निषेध्यवशात् शुभत्वाशुभत्वे । अतो 'निष्प्रत्यूहमुपास्महे' इत्यादिनिर्देशस्येव शुभतरत्वं; वैकल्यनिषेधेन पौष्कल्यपरत्वात् । अखिलशब्देन चिदचिद्भेदोऽप्यभिप्रेतः । **जन्म** नित्यनैमित्तिकप्राकृतरूपम् । **स्थेमा** स्थितिः । सा चान्तर्यामिविष्ण्ववतारलोकपालमन्वादिनृपमातापित्रादिमुखेन क्रियमाणा बहुविधा विवक्षिता । **भङ्गः** नित्यनैमित्तिकप्राकृतरूपः । मोक्षस्य लयान्तर्भावेपि शास्त्रस्य परमप्रयोजनत्वादत्र स नान्तर्भावितः । अत एवादिशब्देपि नान्तर्भाव्यः; तस्य साधारणतया स्फुटप्रतिपत्तिहेतुत्वाभावात् । पृथगेव हि पूर्वैश्च स्पष्टतरं निर्दिष्टो मोक्षः—'जगदुद्भवस्थितिप्रणाशसंसारविमोचनादय' इति, 'जगज्जन्मस्थितिध्वंसमहानन्दैकहेतव' इति च । भगवान् भाष्यकारश्च तथा निर्दिशति यथा वेदार्थसङ्ग्रहे–'उद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूत' इति, भाष्ये च 'निखिलजगदुदयविभवविलयमहानन्दैककारण' मिति । **विनते**त्यादिपदेन स्थेमान्तर्भूतस्वर्गादिसांसारिकफलप्रदत्वस्य पृथगुक्तिरनपेक्षिता । असाधारणस्य परमप्रयोजनस्य मोक्षस्यैव हि पृथगुक्त्यपेक्षा । आदिशब्देन सृष्ट्याद्यौपयिकमन्तःप्रवेशनियमनादि गृह्यते । तथा च भाष्ये स्वयमेव वक्ष्यति—'जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलील'मिति । जन्मस्थेमभङ्गोक्त्यैवान्तःप्रवेशनियमनादेरर्थसिद्धत्वाश्रयणमयुक्तम्; अध्यासपरिणामपक्षयोस्तस्यार्थत्वाभावेन तद्व्यावृत्त्यर्थं स्वमते पृथग्वक्तव्यत्वात्, शाब्दत्वे संभवत्यार्थत्वकल्पनायोगात्, विस्तरेणोक्तस्यार्थस्य संक्षेपोक्तौ विवक्षितत्वोपपत्तेश्च । **लीला**शब्देन भगवतः परिपूर्णत्वानन्यप्रेर्यत्वस्वच्छन्दचेष्टितत्वादिकमभिप्रेतम् । यथोक्तं महाभारते–'अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी । मोदते भगवान्भूतैर्बालः क्रीडनकैरिवे'ति । **अप्रमेयत्वं** परिपूर्णत्वम् । **अनियोज्यत्वम**नितरचेतनप्रेर्यत्वम् । **यत्र कामगम** इत्यनेन वायूदकादिप्रेरणाधीना बुद्धिपूर्वकस्पन्दादिचेष्टाव्यावृत्तिः, स्वेच्छाकृतप्रवृत्तिविघातव्युदासो वा । स्वाधीनलीलोपकरणत्वं वशिशब्दार्थः । विश्वं वशे यस्य स **वशी** । इन्द्रियपराधीनचेष्टाव्यावृत्त्यर्थो वशिशब्दः । **बालक**दृष्टान्तेन लीलायाः प्रयोजनान्तरनैरपेक्ष्यमभिप्रेतम् । अनेन राज्ञां पणबन्धपूर्वकद्यूतादिव्यावृत्तिः । कार्यवर्गापेक्षया भगवन्महिम्नो विपुलतरत्वं **क्रीडनकै**रित्यनेन फलितम् ॥ **ननु** प्रयोजकव्यापारोहि लीला, अतो भङ्गस्य लीलात्वे युक्तेपि कथं प्रयोज्यव्यापारभूतयोर्जन्मस्थित्योर्लीलात्वम्; उच्यते–बहु स्यां प्रजायेये'तिहि श्रुतिः, अतः प्रयोजकव्यापारवत् प्रयोज्यव्यपारस्य च लीलात्वकथनेनोपादानत्वं फलितं, लीलाशब्देन निमित्तत्वं च ॥ **भङ्गादी**त्यन्तेन प्रथमाध्यायार्थः संक्षिप्तः ॥ अवाप्तसमस्तकामस्य व्यापारानुपपत्तिं परिहरता **लीला**-

शब्देन विरोधपरिहारपरद्वितीयलक्षणार्थः सूचितः ॥ एवं पूर्वद्विकोक्तं कारणत्वरूपं परत्वं संक्षिप्तम् ॥ तस्यैव समाश्रयणीयताप्रतिपत्त्यर्थमुत्तरद्विकोक्तमभिगम्यत्वमोक्षप्रदत्वलक्षणं सौलभ्यं संक्षिप्यते–**विनतेत्यादिना** । केवलं परत्वं केवलं सौलभ्यं च कनकाचललोष्टशकलयोरिव न समाश्रयणीयत्वाय कल्पत इति तदुभयव्यावृत्त्यर्थमिदं पदद्वयम् । विशेषेण नताः **विनताः** प्रह्वीभूता न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः विवक्षिताः । वैविध्यं च–'तदुपर्यपि बादरायणः संभवात्, ऊर्ध्वरेतस्सु चे' त्यादिना वक्ष्यमाणदेवत्वमनुष्यत्ववर्णाश्रमादिभेदेन जन्मवृत्तगुणैश्चाभिप्रेतम् । भगवज्ज्ञानेन लब्धसत्ताकत्वं भूतशब्दार्थः; 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु' रितिहि श्रुतिः । लब्धस्वरूपाणां च—'तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थः, ददामि बुद्धियोगं तम्, अहं स्मरामि मद्भक्त' मित्याद्युक्तप्रकारेण साक्षात्कारविरोधिनिवर्तनादिकं हि भगवतएव भर इति न स्वरूपप्रच्युतिसंभवः । भूतसंबन्धी व्रातो भूतव्रातः । संश्रितसंबन्धिनोपि तत एव कारणाद् भगवतो रक्ष्या इत्यभिप्रायः । यथा—'आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः । वैष्णवो नः कुले जातः स नः संतारयिष्यती'ति 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पद' मिति च । **ननु** षष्ठ्यन्तनिर्दिष्टानतिरिक्तविषयः समुदायशब्दः, यथा–ब्राह्मणसमाज—इति, नैवं; राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात्, समासान्तर्गतायाः षष्ठ्याः संबन्धमात्रविषयत्वात्, षष्ठ्यन्तनिर्दिष्टानतिरिक्तत्वनियमस्यानुशासनाभावाच्च । समुदायशब्दे श्रुते समुदायिनः के इत्यपेक्षायां संनिहितशब्दवाच्यनिष्ठः समुदायः शीघ्रं प्रतीयत इति ब्राह्मणसमुदाय—इत्यादिष्वनतिरेकप्रतीतिः, राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात् तत्तत्समुदायग्राहकप्रमाणानुरोधेनार्थवर्णनं युक्तमिति यथोक्त एवार्थः । एवंच सति व्रातशब्दप्रयोगस्यार्थवत्त्वं स्यात् ॥ इष्टप्रापणपर्यन्तानिष्टनिवारणलक्षणा रक्षा । तस्या**मेकदीक्षः** प्रधानदीक्षः । **दीक्षा** संकल्पः । स्वसत्ताया अपि संश्रितरक्षासंकल्पनिर्वर्तनस्यात्यन्ताभिमतत्वं प्राधान्यम्; 'अप्यहं जीवितं जह्या' मिति ह्युक्तम्, 'काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकर' मिति चापस्तम्बः । ईदृशीयं स्मृतिर्यस्याज्ञा तस्यापि तथानुष्ठानस्याभिमततरत्वम् 'अप्यहं जीवितं जह्या' मित्यनेनावगम्यते । दीक्षाप्राधान्येन रक्षाप्राधान्यं फलितम् । दीक्षाशब्देनाश्रितसंरक्षणस्य स्वप्रयोजनत्वं दर्शितम् । व्रतभ्रंशसमाप्त्योरनर्थाभ्युदयफलत्वं हि व्रतिन एव । संश्रितरक्षणं च तद्व्रतं यथा—'ददाम्येतद्व्रतं ममे'ति । **विनतरक्षा**शब्दाभ्यां तृतीयचतुर्थाध्यायार्थौ संक्षिप्तौ । एवं जगत्कारणत्वमोक्षप्रदत्वे कथिते । एते हि राज्ञश्छत्रचामरवद् ब्रह्मणोऽसाधारणं चिह्नम् । परत्वसौलभ्ये च संश्रयणीयतानिमित्ततयावगते; यथा—'य एनं विदुरमृतास्ते भवन्ती' त्युपक्रम्य 'संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एक' इति 'सर्वलोकमहेश्वरं, सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छती'ति च । प्रमेयशरीरं साधीयः यदि प्रमाणमुपलभामहे—इत्यपेक्षायां द्विकद्वयशेषभूतचतुःसूत्र्यर्थं वदन् प्रमेयानुरूपं प्रमाणं दर्शयति—**श्रुतिशिरसि विदीप्त इति** । श्रूयते नित्यमिति श्रुतिः । अनेनापौरुषेयत्वान्निर्दोषत्वं विवक्षितम् । अत एव पूर्वमीमांसान्यायानां प्रामाण्याद्युपयोगिनामत्रोपजीव्यत्वं सूचितम् । **शिरः**शब्देनानन्यपरत्वं विवक्षितं; परतत्त्वप्रधाना मन्त्रब्राह्मणभागा ह्युपनिषदः । **विदीप्ते** पूर्वभागेपि अग्नीन्द्रादिरूपतया ब्रह्मण एव प्रतिपाद्यत्वं 'तदेवाग्निस्तद्वायु' रित्यादिनोपनिषद्वाक्येनैव ज्ञायत इति विशेषेण दीप्तं विदीप्तम् । यद्वा—क्षुद्रसुखसाधनभूतदुःखात्मकप्रवृत्तिनिवृत्तिरूपं प्रयोजनं पूर्वभागे दीप्तं, ब्रह्म तु स्वयं निरतिशयानन्दरूपतया परमपुरुषार्थभूतमुपरितनभागे विशेषेणदीप्तमिति भावः । अनेन समन्वयाधिकरणार्थः सूचितः, तत्पूर्वाधिकरणत्रयार्थश्चात्र द्योतितो भवति; व्युत्पत्तिलक्षणसौष्ठवाभावे श्रुतिशिरोवेद्यत्वायोगात्, श्रुतिशिरःशब्दस्य प्रमाणान्तरव्यावर्तकत्वाच्च । **ब्रह्मणी**ति सामान्यपदमौपनिषदानां सद्ब्रह्मात्मादिसामान्यशब्दानां प्रदर्शनार्थं, **श्रीनिवास** इति विशेषपदं नारायणादिविशेषशब्दानां प्रदर्शनार्थं; 'पशुना यजेत, छागस्य वपाया मेदस' इत्यत्र 'छागो वा मन्त्रवर्णा' दिति सूत्रोक्तन्यायेन पशुशब्दस्य छागशब्दपर्यवसायित्वनिर्णयात् । सामान्यवाचिपदानां विशेषवाचिपदे सति तत्पर्यवसायित्वात्, सद्ब्रह्मात्मादिसामान्यशब्दानां नारायण एव विशेषे पर्यवसानं सूचितम् । श्रीनिवासशब्दस्यावयवशक्त्या नित्यविभूतिमत्त्वं सूचितम् । रूढिशक्त्या त्रिमूर्तिसाम्यं, तदैक्यं, ब्रह्मणस्तदुत्तीर्णत्वं च निषिद्धम् । ईश्वर एव ब्रह्म, स त्रिमूर्त्यतिरिक्तः सदाशिवः, ब्रह्मादयस्त्रयोप्यनीश्वरा इति पक्षश्च व्युदस्तः । **परस्मिन्निति** 'परमतः सेतून्माने' त्यधिकरणार्थः सूचितः, तेनोपेयान्तरव्यावृत्तिः; 'ब्रह्मविदाप्नोतिपर' मित्यत्र प्राप्यस्य परशब्देनाभिधानात् । यद्वा कारणत्वशङ्कितदोषव्युदासाय 'न स्थानतोपी' त्यधिकरणसिद्धं शोधकवाक्योक्तमुभयलिङ्गतया वैलक्षण्यं सूचितम् । अथोपायस्वरूपं वदति—**शेमुषीति** । अयं सामान्यशब्दः, **भक्तिरूपेति** विशेषशब्दः । अत्रापि 'छागो वा मन्त्रवर्णा' दिति न्यायोऽभिप्रेतः । **शेमुषी**शब्दोपादानेन ज्ञानकर्मसमुच्चयव्यावृत्तिः । **भक्तिरूपेति** वाक्यार्थज्ञानव्यावृत्तिः । 'शुद्धभावङ्गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्, भक्त्या त्वनन्यया, ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं चे' त्युक्तप्रकारेण ज्ञानदर्शनप्राप्तिसाधनभूता भक्तिरप्यत्र विवक्षिता; अविशेषेण भक्तिरूपेत्युक्तत्वात् । 'अहमस्म्यपराधानामालय' इत्याद्युक्तप्रकारेण स्वात्मानमनुसन्धायाह—**ममेति** । **भवत्विति** भक्तेरेव स्वादुतमतया

पा०—१ समूह. । २ यदाज्ञा । ३ नमति । ४ पृथिवी । ५ आनन्दतया । ६ अर्थसूचनम् ।

**पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।** ( वि. पु. ६।५।८५ ), **'अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥'** ( वि. पु. ६।७।६१ ) इति भेदव्यपदेशात् । **'उभयेऽपि हि भेदेनैनमधीयते'** ( ब्र. सू. १।२।२१ ), **'भेदव्यपदेशाच्चान्यः'** ( ब्र. सू. १।१।२२ ), **'अधिकं तु भेदनिर्देशात्'** ( ब्र. सू. २।१।२२ ) इत्यादिसूत्रेषु च **'य आत्मनि तिष्ठन्नात्मनोन्तरः । यमात्मा न वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति'** ( बृ. ३।७।२२ ), **'प्राज्ञेनात्मना संपरिष्वक्तः'** ( बृ. ४।३।२१ ), **'प्राज्ञेनात्मनान्वारूढः'** ( बृ. ४।३।३५ ) इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् । नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः; अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासंभवात् । यथोक्तम्— **'परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥'** ( वि. पु. २।१४।२७ ) इति । मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्— **'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥'** ( गी. १४।२ ) इति । इहापि—

---

चशब्देनोक्तम् । **उभयेऽपी**त्याद्युपात्तसूत्रद्वयस्य विषयवाक्यं—**य आत्मनीति** । **अधिकं**त्वित्यादिसूत्रस्य विषयवाक्यं—**प्राज्ञेनेति** । सूत्रेष्वाभिः श्रुतिभिरेवमर्थनिर्णयादित्यर्थः ॥

एवमुपनिषत्पुराणवचनसूत्रैर्जीवपरयोर्विरुद्धधर्मत्वमुपपादितम्, अथ **ब्रह्म वेद ब्रह्मैव भवती**त्यादिवाक्यानि हृदि निधायास्याऽन्यथासिद्धिं शङ्कते—**नापीति** । तद्दूषयति—**अविद्याश्रयत्वेति** । **अविद्याश्रयत्वयोग्यत्वम्**—**अविद्या**शब्दः समस्तहेयप्रदर्शनार्थः, **आश्रय**त्वशब्दः संबन्धपरः, हेयसंबन्धात्यन्ताभावानधिकरणत्वं **तद्योग्यत्वं**, हेयसंबन्धात्यन्ताभावाधिकरणत्वं **तदनर्हत्वम्** । **अनश्नन्न्य** इत्यादिश्रुत्या परमात्मनस्तदनर्हत्वं सिद्धम् । देशकालसन्निकर्षे सत्यपि तदस्पर्शो हि स्वभावसन्निकर्षाभावात् । स्वभावसन्निकर्षाभाव एव ह्ययोग्यत्वं, यथा—नभसः क्लेदनदहनाद्यनर्हत्वम् । अतो-हेयार्ह–तदनर्हयोः स्वरूपोपगमेऽपि न स्वरूपैक्यं संभवति निग्राह्यस्य पश्चादनुगृहीतस्य हि निग्राह्यत्वापगमेऽपि निग्रहानुग्रहकर्त्रा पुरुषेण नैकत्वसंभव इत्यर्थः । कारागृहविनिर्मुक्तस्य नियन्त्रा नरपतिना न स्वरूपैक्यं संभवतीत्यर्थः । अस्मिन्नर्थे पुराणवचनमाह—**यथोक्तमिति** । **योग**शब्द ऐक्यपरः; अन्यथा 'अन्यद्द्रव्यं हि तद्द्रव्यतां नैती'ति प्रतिक्षेपानुपपत्तेः । ननु—**मिथ्यैत**दित्युत्तरत्रान्वयः । **परमात्मनोर्योगः परमार्थः अन्यद् द्रव्यं हि तद्द्रव्यतां नेतीत्येतन्मिथ्ये**त्यर्थ इति—चेन्मैवम्; अन्यस्यान्यद्रव्यतानापत्तेः सत्यत्वात्; इतरथा जडाजडयोस्तादात्म्यप्रसङ्गः । 'ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तवे'तिवत्–**इष्यत** इत्यनेन पूर्वार्धोक्तार्थस्य परमतत्वद्योतनात्—अन्य**थेष्यत** इति पदवैयर्थ्यात् । किंच 'परमार्थस्तु भूपाल संक्षेपाच्छ्रूयता'मिति वक्ष्यमाणपक्षव्यतिरिक्तपक्षाणां निराकरणपरत्वाच्च—प्रकरणस्य तच्छ्लोकपूर्वार्धोक्तैक्यसमर्थनपरत्वमुत्तरार्धस्य नोपपद्यते । 'धर्माय त्यज्यत' इत्यादिग्रन्थैस्तत्तदर्थानां परमार्थत्वं हि निरस्यते । स्वतः प्रकृतार्थे स्वरसस्य **एत**च्छब्दस्य प्रकृतार्थे सत्यपि वक्ष्यमाणपरत्वाश्रयणमप्ययुक्तम् । किञ्च—**अन्यद्द्रव्यं तद्द्रव्यतां नैतीति यत् एतन्मिथ्येति** हि तदानीमर्थः, तथाच सति–**यतः**शब्दस्य स्वारस्यभङ्गः; **यतः**शब्दस्य हि हेतुपरत्वं स्वरससिद्धं; ननु यच्छब्दवत्प्रकृतार्थशरीरमात्रपरामर्शित्वम् । **अन्यद्द्रव्यं तद्द्रव्यतां नैतीत्येतन्मिथ्येति यतः ततः ऐक्यं परमार्थ**—इत्यन्वये **इति**शब्दद्वयाध्याहारप्रसङ्गः, स चानध्याहारेण निर्वाहे सति नोपपद्यते । यदुच्येत पूर्वं पृथग्भूतयोः **परमात्मात्मनोरैक्यं परमार्थ इष्यत इति चेन्मिथ्यैतत्; अन्यद्द्रव्यं हि तद्द्रव्यतां नैतीति यत**स्तस्मात्पूर्वमपि परमात्मात्मनोर्भेदो नास्तीति—नैवं; पूर्वं भ्रान्त्या पृथग्भूतयोरित्यस्याश्रुतत्वेनाध्याहारप्रसङ्गात्, स चानध्याहारेण निर्वाहे संभवति नोपपद्यते । किंच–तस्मात्पूर्वमपि भेदो नास्तीत्यश्रुतवाक्यान्तराध्याहारेण वाक्यस्य पूरणीयत्वं स्यात्, तच्च तन्निरपेक्षनिर्वाहे संभवति नोपपद्यते । तस्मा**त्प्रागपि भेदो नास्तीति** वाक्यं नाध्याहर्तव्यं; **पूर्वं भिन्नयोः परमात्मात्मनोः पश्चादभेद**—इति–पक्षनिराकारणमात्रपरत्वाद्ग्रन्थस्य—इति चेत्, किं तेन प्रयोजनं, पूर्वमप्यैक्यसिद्धिरिति—चेन्न; पूर्वं पृथग्भूतयोः पश्चादैक्यायोगेऽभिहिते सति पश्चादपि भेदसिद्धेः, अतः स्वरससिद्ध एव वाक्यार्थः स्वीकार्यः ॥

अथ **ब्रह्म वेद ब्रह्मैव भवती**त्यादिवाक्यनिर्वाहं बहुश्रुत्यन्तराविरोधेन च वक्ष्यन्मुक्तस्य साम्यापत्तिमाह—**मुक्तस्येति** । तत्रैक्यश्रुतेः प्रतिकूलार्था साम्यश्रुतिर्दर्शयिष्यत इति मत्वा व्याख्येयतया—प्रकृतस्योपबृंहणवचनस्य सजातीयं परासिमतार्थप्रतिकूलार्थस्मृतिवचनं दर्शयति—**इदमिति** । मुक्तपरत्ववैशद्यायोपादानं **सर्गेपीति** । न केवलं शास्त्रान्तरे, अत्रापि

'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने। विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥' (वि. पु. ६।७।३०) इति। आत्मभावमात्मनः स्वभावम्; नह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य। वक्ष्यति च 'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च' (ब्र. सू. ४।४।१७), 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र. सू. ४।४।२१), 'मुक्तोपसृप्यव्यपदेशाच्च' (ब्र. सू. १।३।२) इति। वृत्तिरपि 'जगद्व्यापारवर्जं समानो ज्योतिषा' (बो. वृ.) इति। द्रमिडभाष्यकारश्च 'देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिः स्या'दित्याह। श्रुतयश्च—'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. ८।१।६), 'ब्रह्मविदाप्नोति परम्' (तै. २।१।१), 'सोऽश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता' (तै. २।१।१), 'एतमानन्दमयमात्मानमुपसंक्रम्य। इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन्' (तै. ३।१०।५), 'स तत्र पर्येति' (छा. ८।१२।३), 'रसो वै सः। रसꣳ ह्येवायं लब्ध्वानन्दी भवति।' (तै. २।७।१), 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपा-

---

मुक्तस्य भेदप्रतिपत्तिरस्तीत्याह—**इहापीति**। इह योगप्रकरणे, सङ्क्षेपकथनारम्भ इत्यर्थः। संक्षेपविस्तराभ्यां तु 'किमन्यत्कियतां तवे'ति ह्युक्तम्। **आत्मनः शक्त्या विकार्यम**वस्थान्तरं नेयम्। **ध्यायिनमेनं तद्** ब्रह्म **आत्मभावं नयति आत्मनः शक्त्या विकार्यं लोहमाकर्षको यथे**त्यन्वयः। **आकर्षको** वह्निः—दोषमाकर्षतीति व्युत्पत्त्या। 'यथाग्निरुद्धतशिखः कक्षं दहति सानिलः। तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिष'मिति ह्युत्तरत्र वक्ष्यते। श्रीविष्णुधर्मे च—'यथाग्निसङ्गात्कनकमपदोषं प्रजायत' इति। सोऽग्निः **आत्मभावं आत्मनः स्वभावं**—निर्दोषत्वं **लोहं नयति** तथेत्यर्थः, अयं सम्यगर्थः। यद्वा, **आत्म**शब्दः स्ववाची सन्नन्वययोगव्यतिरेकपरः। **यथाऽग्निर्लोहमात्मभावं** स्वभावं—स्वतःसिद्धरूपं नयति, तद्वदित्यर्थः। यद्वा, **आकर्षको**ऽयस्कान्तः **लोहमात्मभावं नयति** स्वव्यापारं लोहं कारयति—स्वमनुकारयति। 'स्थितः स्थितामुच्चलितः प्रयाता' मितिवत्—अयस्कान्तस्तिष्ठति चेत् लोहस्तिष्ठति, धावति चेत्तमनुधावति, एवं—'कामान्नीकामरूप्यनुसंचरन् सर्वेषु लोकेषु कामचारो भवती'त्यादिश्रुत्यनुगुणं परमात्मा उपासकं स्वचेष्टामनुकारयति, समानचेष्टितं करोतीत्यर्थः। यद्वा, **आत्म**शब्दः स्ववाची निष्कृष्टस्वरूपपरः, उपासकं परमात्मा **आत्मभावं नयति** प्रकृतिसंबन्धराहित्येन शुद्धतां नयति—केवलतां नयति। यथा—अयस्कान्तो दारुनिमग्नं लोहं तस्माद्दारुण उद्धृत्य केवलतां नयति—तद्वदित्यर्थः। यद्वा, 'भू प्राप्तावात्मनेपदी'ति वचनात्—**भाव**शब्दः प्राप्तिवचनः—**आत्मप्राप्तिं नयति,** यथा—लोहमयस्कान्तः स्वप्राप्तिं नयतीत्यर्थः। **प्राप्तिं नयती**ति निर्देशः—ओदनपाकं पचतीतिवत्। जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तं; जीवस्य बन्धमोक्षयोर्ज्ञानसंकोचविकासरूपविकारार्हत्वात्। अत्र श्लोके तादात्म्यप्रतिपत्त्यभावं दर्शयति—**न हीति**। आकर्षकस्वरूपापत्तिराकृष्यमाणस्येति निर्देश उक्तः। सर्वार्थसाधारणः अग्निसुवर्णदृष्टान्तविवक्षायामाकृष्यमाणशब्दो विकार्यपरः। **समानो ज्योतिषेति ज्योतिः** परं ब्रह्म; 'परं ज्योतिरुपसंपद्य, अथ यदतः परो दिव्यो ज्योतिर्दीप्यत' इति श्रुतेः। **द्रमिडेति। अशरीरो** मुक्तः, कर्मकृतशरीराभावात्। **सिद्धिरनुभवः**। मुक्तौ जीवपरयोर्भेदश्रुतीर्दर्शयति—**श्रुतयश्चेति। आप्नोति** परमनुभवतीत्यर्थः। एतद्विवरणरूपं वाक्यं दर्शयति—**सोऽश्नुत इति। अनुसंचर**न्नित्यनेन भेदो दर्शितः। **रसो वै स** इत्यनेन **साम्य**मानन्दित्वाकारेणेत्युक्तं भवति। परमसाम्योपयोगिनीं वैधर्म्यनिवृत्तिं दर्शयति—**यथा नद्य इति**। नदीनां नदीत्वाकारप्रहाणेन समुद्रसंसर्गात्—वैधर्म्यप्रहाणेन संसर्गो दृष्टान्ते उपजीव्यः। प्राक्तननामरूपप्रहाणपूर्विका हि परमात्मप्राप्तिः। नच तावता भेदनिवृत्तिः; **पुरुषमुपैती**ति कर्मकर्तृभावावगमात्। साम्यापत्तिं दर्शयति—**तथेति**। ननु—**परमं साम्यमुपैती**त्यैक्यापत्तिरुच्यते; **सम**शब्दस्य समानपर्यायत्वात्, समानशब्दस्यैक्ये प्रयोगाच्च। समशब्दस्यैक्ये प्रयोगो दृश्यते समकालवर्तीत्यादिषु, तथा **सम**शब्दपर्यायतया अवगत**समान**शब्दोऽप्यैक्ये प्रयुज्यते—'समानं वृक्षं परिषस्वजाते' इति, **एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्य**मिति च। ऐकाधिकरण्यं हि सामानाधिकरण्यम्; एकस्मिन्नर्थे इत्युक्तेः। तत्पर्यायश्च **सम**शब्दः। यद्यपि—सादृश्यस्यापि **सम**शब्दो वाचकः, तथापि—मुक्तिवाक्यस्थ**साम्य**शब्द ऐक्यपरः; **ब्रह्म वेद ब्रह्मैव भवती**त्यादिश्रुत्यन्तरैकार्थ्यात्, **लयसायुज्य**शब्दश्रवणात्, नदीसमुद्र—घटाकाशमहाकाशादिदृष्टान्तश्रवणाच्च। **साधर्म्यमागता** इति स्मृतिस्तु सगुणप्राप्तिविषया; अन्यथा प्रत्यक्षश्रुतिविरोधे, स्वरूपैक्यविषय-

---

१ स्वभाववाची का. मु. पु.।

बहुस्मृतिविरोधे च—तद्दौर्बल्यात् । अत ऐक्यापत्तिरेवानेन वाक्येन प्रतिपादिता । ऐक्यस्य च **पारम्यं** नाम—पुनर्भेदप्रभप्ररोहविरहितत्वमिति । **अत्रोच्यते–अत्र साम्य**शब्दः सादृश्यमेवाभिधत्ते, न त्वैक्यम् ; ऐक्यस्य मुख्यार्थत्वेऽभ्युपगतेऽपि स्वारस्याभावात् । सादृश्ये एव हि **सम**शब्दस्य प्रसिद्धिप्राचुर्यं, तस्य चापवादाभावे सत्यस्वरसार्थस्वीकारोऽनुपपन्नः, अपवादहेतवश्च त्वदुक्ता अनन्तरमेव परिह्रियन्ते । नच **समा**दिशब्दानामैक्यं मुख्यार्थः; एकत्वविवक्षायामेको घट इत्यादौ समो घट इत्यादिप्रयोगाभावात् । मुख्यत्वे हि एकशब्दस्येव प्रतियोगिनिरपेक्षप्रयोगः प्राप्नोति । यत्तु सामानाधिकरण्यं समकालवर्तीत्यादिषु **समादि**शब्दप्रयोगः स तु साधारण्यार्थः, न त्वैक्यार्थः, साधारण्येऽपि प्रयोगो न मुख्यः; प्रयोगेऽन्यथासिद्धे शक्तिकल्पनाऽनुपपत्तेः । तथाहि—अनेकप्रतियोगिकैकरूपसबन्धवत्त्वं साधारण्यं, यथा—धनं देवदत्तयज्ञदत्तौ प्रति शेषत्वेन संबन्धितया साधारणं, तयोश्च धनं प्रति शेषितयास्ते सादृश्यं, ताभ्यां संबन्धि धनं, तथा—नीलत्वोत्पलत्वे अपेक्ष्याधारतया संबन्धि द्रव्यं साधारणं, तयोश्च द्रव्यं प्रत्याधेयतयास्ते सादृश्यं, ताभ्यां संबन्धि द्रव्यं, तथा—द्वाभ्यां संयोगित्वेन अवच्छेद्यावच्छेदकभावेन वा संबन्धी कालस्तयोः साधारणः, तत्कालसंबन्धित्वाकारेण तयोरपि सादृश्यमस्ति, ताभ्यां संबन्धी कालः । अतो मिथःसदृशपदार्थसंबन्धितया द्रव्यकालादिषु समसमानादिशब्दा लक्षणया वर्तन्त इति—न मुख्याः । अत ऐक्ये प्रयोगाभावात्—**सम**शब्दस्यैक्यं न मुख्यार्थः, मुख्यार्थे संभवति लाक्षणिकार्थस्वीकारो नोपपद्यते, अतः **साम्य**शब्दः सादृश्यमेवाभिधत्ते । मुक्तात्मगोचरसामानाधिकरण्योपपत्तिश्चानन्तरमेव भाष्ये वक्ष्यते । यदुक्तं—**सायुज्य**शब्देन मुक्तावभेद—इति, तदयुक्तं; **सायुज्य**शब्दस्य समानगुणयोगवाचित्वात् । **युज्यत** इति युक्शब्दो गुणपरः, धर्मिणि हि गुणः संबध्यते । समानगुणकः **सयुक्** तस्य भावः **सायुज्यमिति** हि व्युत्पत्तिः । प्रयोगविरोधाच्च नैक्यं सायुज्यम् । ‘एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोती’ति बह्वीभिर्देवताभिरेकस्य सायुज्यापत्तिः श्रूयते, न ह्येकस्य निरवयवस्याच्छेद्यस्यात्मनो बह्वीभिर्देवताभिरैक्यं संभवति, क्रमभावित्वादविरोध इति चेत्—तर्ह्यग्निनैकीभूतस्य वरुणसायुज्यापत्तावग्नित्वोपाधेः प्रहाणात्–अग्नेर्देवताया अभावः स्यात्; अग्नित्वोपाधौ स्थिते—वरुणैक्यापत्त्यनुपपत्तेः, औपाधिकभेदप्रहाणं ह्यैक्यापत्तिः, न तु पूर्वमविद्यमानमैक्यमुत्पद्यते । अग्नौ स्थित एव ततः पृथग्भूतस्य वरुणसायुज्यमिति चेत्—एकीभूतस्य पृथग्भावो ह्युपाधितः स्यात्, उपाधिश्च देहान्तःकरणादिः, तत्सबन्धस्याहेतुकत्वेऽतिप्रसङ्गात्—हेतुर्वाच्यः । कर्मैव हेतुरिति चेत्—अग्निसायुज्यापत्तिदशायां तत्कर्म नष्टं, न वा । नष्टं चेत्, पुनरुपाध्यनुदयेनाग्नितः पृथग्भावायोगात्, अग्नित्वोपाधेश्चाप्रहाणात्, पूर्वोपाधिप्रहाणरूपवरुणसायुज्यापत्तिः क्रमेणापि नोपपद्यते । अनष्टं चेत्—तत्कृतोपाधेरनष्टत्वात्–नाग्निनैक्यापत्तिसंभवः, औपाधिकभेदस्य तत्प्रहाणरूपैक्यापत्तिविरोधित्वात् । अनष्टमपि तत्कर्माग्निसायुज्यापत्तिदशायां ततो भेदकमुपाधिं न जनयति; कर्मणां कार्यकरत्वस्य कालविशेषनियतत्वादिति चेत्, तथापि व्यवस्थितकर्मविशेषपरिष्वक्तस्य जीवस्य तत्कर्मापरिष्वक्तादग्नितस्तदेव कर्म भेदकमिति—नाग्निनैक्यापत्तिरुपपन्ना । किंच—पृथिव्येकीभूतपृथग्भूतघटस्येव–अग्निनैकीभूतपृथग्भूतजीवस्याजत्वनित्यत्वानुपपत्तिश्च । अतो भेदे स्थित एव अग्न्यादिसायुज्यम् । समानलोकतासाहचर्याच्च नैक्यं सायुज्यं; न ह्येकस्य स्वेन समानलोकत्वसंभवः, अतः समानलोकत्ववद्भेदे सिद्ध एव सायुज्यं भवति । समानलोकताप्राप्त्यनन्तरं सायुज्यापत्तिः, न तु युगपदेव, अतस्तयोरविरोध—इति चेन्न; **सायुज्यं सार्ष्टितां समानलोकता**मिति सायुज्यस्य पूर्वश्रुतत्वात् । अर्थक्रमेण पाठक्रमबाध इति—चेन्न; अवयवशक्त्युपस्थापितार्थस्य पाठक्रमानुगुणत्वात्, अर्थान्तरकल्पनस्याहेतुकत्वाच्च । यदि—पाठक्रमबाधार्थं **सायुज्य**शब्दस्यैक्यापत्तिलक्षणार्थविषया रूढिशक्तिः कल्प्यते, तदा—अन्योन्याश्रयः स्यात्—सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चये पाठक्रमबाधः, पाठक्रमबाधे सति सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चय—इति । **एतेषामेव सलोकतां सायुज्यमश्नुत** इति वाक्यात् पूर्वोदाहृतवाक्यस्थक्रमबाध इति—चेन्न; विरुद्धार्थविषयाया रूढिशक्तेरक्लृप्ततया—विरोधास्फुरणात् । किंच—‘अग्नेर्वा एतानि नामधेयानि, अग्नेरेव सायुज्यं सलोकतामाप्नोति, वायोरेव, इन्द्रस्यैव, बृहस्पतेरेव, प्रजापतेरेव, ब्रह्मण एव सायुज्यं सलोकतामाप्नोती’ति भूयसां वाक्यानां बलीयस्त्वात्त्वदुक्तक्रम एव बाधः । किंच—‘**एतेषामेव सलोकतां सायुज्यमश्नुते,** अग्नेरेव सायुज्यं सलोकतामाप्नोती’त्यादिवाक्यानि कर्मविधिशेषार्थवादरूपाणि, कर्मफलत्वाच्च—अग्न्यादिदेवतासायुज्यमनित्यम्, अतः कर्मफलावसानेऽग्न्यादिभ्यस्तत्सायुज्यं प्राप्तानां पृथग्भावस्यावर्जनीयत्वात्, आमोक्षाज्जीवभेदस्थितेर्भवतामपीष्टत्वात्–अग्न्यादिसायुज्यदशायामपि भेदस्थितिरवर्जनीया । अग्न्यादिसायुज्यं गतानां ततः पृथग्भावः पुनरप्युपाधित—इति चेत्, दत्तमुत्तरम् । नच–अग्न्यादिसायुज्योक्तिरर्थवादत्वादनादरणीयेति वाच्यम्; वेदान्तिभिरर्थवादानां प्रतीयमानार्थे प्रामण्याभ्युपगमात् । अतो न सायुज्यमैक्यम्, अपि तु समानगुणयोग एव । लयोऽपि न स्वरूपैक्यं; **लय**शब्दस्य तदर्थत्वाभावात्—प्रयोगानुगुणं शब्दार्थव्यवस्थापनं कार्यमिति—नित्यनैमित्तिकमहाप्रलयेष्वपि **लय**शब्दः प्रयुज्यते, न तत्र स्वरूपैक्यापत्तिः । न तावन्नित्यप्रलये; स्वर्गनरकादिगमनागमनशास्त्रात् । नापि नैमित्तिके; पूर्वकल्पप्रलीनानां नारदादीनां प्राग्जन्मप्रत्यभिज्ञानवत्तामेव पुनरुत्पत्त्यवगमात्, नारदेन पूर्वकल्पे स्वजन्मवृत्तादिकमिह कल्पेऽभिहितमिति पुराणेष्ववगम्यते । नापि महाप्रलये;

**द्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥'** (मु. ३।२।८), **'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'** (मु. ३।१।३) इत्याद्याः। परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यं, फलं चैकरूपमेव—अतो विद्याविकल्प इति सूत्रकारेणैव—**'आनन्दादयः प्रधानस्य'** (ब्र. सू. ३।३।११), **'विकल्पोऽविशिष्टफलत्वात्'** (ब्र. सू. ३।३।५७) इत्यादिसूक्तम्। वाक्यकारेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः—**'युक्तं तद्गुणकोपासनात्'** (वाक्यम्) इति। भाष्यकृता व्याख्यातं च—**'यद्यपि सच्चित्तः'** (द्र. भा.) इत्यादिना। **'ब्रह्म वेद ब्रह्मैव भवति'** (मु. ३।२।९) इत्यत्रापि **'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्'** (मु. ३।२।८), **'निरञ्जनः परमं साम्यमुपैति'** (मु. ३।१।३), **'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते'** (छा. ८।३।४) इत्यादिभिरैकार्थ्यात्—प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते। प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा—सोयं गौरिति।

---

वैषम्यनैर्घृण्यपरिहाराय जीवनित्यत्वबहुत्वकर्मवासनानां तदानीं विद्यमानताया अभ्युपगन्तव्यत्वात्। तथा—'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी'ति वदता भगवता पराशरेणैव हि—'हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते॥ प्रधानकारणीभूता यतो वै सृज्यशक्तयः। तेषां ये यानि कर्माणि प्राक्सृष्ट्याः प्रतिपेदिरे' इत्यादिभिस्तदानीं सवासनकर्मान्वितजीवबहुत्वं च दर्शितम्, अत एव भेदप्रहाणं च[1] **लय**शब्दार्थः। नच—प्राकृतप्रतिसंचरमोक्षविषयप्रलयशब्दयोरर्थवैरूप्यं वक्तुमुचितं; शक्तिभेदकल्पनामुख्यत्वयोरन्यतरप्रसङ्गात्। न च तत्रापि महाप्रलयादिषु **लय**शब्दस्यामुख्यत्वं वाच्यं; बहुष्वर्थेष्वमुख्यत्वाश्रयणादपि मुक्तिमात्रविषय**प्रलय**शब्दस्यैवामुख्यत्वाश्रयणोपपत्तेः। अतः सर्वप्रयोगानुगुणोऽर्थः स्वीकार्यः। अतो विसदृशावस्थाप्रहाणेन कारणत्वधर्मिणा द्रव्येण विभागस्यापादानभूतेन संश्लेषो **लयः**, तस्मादैक्यं न **लय**शब्दार्थः। घटाकाशादिदृष्टान्तोपन्यासश्चौपाधिकवैषम्याभावनिबन्धनः; आकाशादितत्त्वानामपि सांशत्वात्तेषां पञ्चीकरणवचनेन प्रदेशभेदवत्ता हि वेदान्तिभिरभ्युपेतव्या। अतो मोक्षविषयासु श्रुतिषु स्वरूपैक्यं क्वचिदपि नावगम्यते। निर्गुणप्राप्तिविषया श्रुतिः काचिदपि नास्तीत्ययमर्थश्चानन्तरमेव उपपाद्यते। अतः साधर्म्यस्मरणस्य सगुणप्राप्तिविषयत्वात्—न परममोक्षविषयत्वम्; अन्यथा निर्गुणप्राप्तिविषयश्रुतिविरोधे स्मृतेर्दौर्बल्यप्रसङ्गादित्यपि—दुरुक्तम्। तस्माद्**यदा पश्य** इत्यादिवाक्ये **साम्य**शब्दः सादृश्यपरः। येनाकारेण साम्यं तस्याकारस्य निरवधिकत्वं **परम**शब्दाभिप्रेतम्। अत इदं वाक्यं परब्रह्मप्राप्तिरूपं परममोक्षं तत्साम्यापत्तिलक्षणमेव प्रतिपादयति॥

अथ सगुणोपासकस्य सगुणब्रह्मप्राप्तिं वदन्त्येताः श्रुतयः, न तु परब्रह्मविदः परब्रह्मप्राप्तिमिति शङ्कायामाह—**परविद्यास्विति। परविद्यासु** ब्रह्मविद्यास्वित्यर्थः। **सर्वासु** परेण सगुणविषयत्वेन, निर्गुणविषयत्वेन चोक्तासु दहरविद्या—सद्विद्या—ऽक्षरविद्यादिष्वित्यर्थः। **अदृश्यत्वादिगुणक** इति परविद्यावाक्यविषयसूत्रस्वारस्यात्—तस्याः सगुणविषयत्वं प्रतीयते। 'आनन्दादयः प्रधानस्ये'ति सूत्रमुपास्यसगुणत्वायोदाहृतम्। 'विकल्पोऽविशिष्टफलत्वा'दिति सूत्रं प्राप्यस्य सगुणत्वायोपात्तम्। अयमर्थः—परेण निर्गुणविषयत्वेनाभिमतानां **सत्यं ज्ञानम्, आनन्दो ब्रह्मे**त्यादिवाक्यानामानन्दादिगुणविशिष्टविषयत्वं, तेषां च गुणानां सर्वविद्यानुयायित्वं चोक्त्वा, तास्वेकैकविद्या फलायालमिति[2] विद्याविकल्पश्चोक्तः, अतः परेण निर्गुणसगुणविषयत्वेनाभिमतासु सद्विद्या—दहरविद्यादिषूपास्यं, फलं च सगुणमिति—सगुणप्राप्त्यतिरेकेण निर्गुणप्राप्तिः प्रमाणशून्या। अतो मुक्तौ भेदपराणां श्रुतीनामन्यथासिद्धिर्नोपपद्यते; प्राप्यवैषम्याभावादिति। सूत्रकाराभिप्रायविदामुक्तिं दर्शयति—**वाक्येति। युक्तं तद्गुणकोपासनादिति। युक्तं** गुणयुक्तमेव प्राप्यं, कुतः—**तद्गुणकोपासना**दित्यर्थः। **विद्याविकल्पश्च** तत्रैव द्रष्टव्यः। **सच्चित्तः** सद्विद्यानिष्ठः। तर्हि—मुक्तावभेदश्रुतेः कोऽर्थ इत्यत्राह—**ब्रह्मेति।** 'स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवती'ति प्रकृतस्य वेदितुर्ब्रह्मपर्यन्तस्वरूपाविर्भावपरमिदं वाक्यमिति यथा सेत्स्यति—तथा वक्ष्यते, इह त्वर्थान्तरमुच्यते। प्राकृतरूपनामप्रहाणज्ञापनाय **नामरूपाद्विमुक्त** इति श्रुतिरुदाहृता। साम्यप्रतिपत्त्यर्थं **निरञ्जन** इति वाक्यमुपात्तम्। तस्यैव साम्यस्य स्वाभाविकत्वज्ञापकं **परं ज्योति**रिति वाक्यम्। तर्ह्यमुख्यत्वं स्यादित्यत्राह—**प्रकारैक्ये चेति। सोऽयं व्रीहि**रित्यादेरुपलक्षणमिदमुदाहरणम्। 'यथर्तुष्वृतु लिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा

---

१ च न लय शब्दः का. मु. पु। २ विद्याविकल्पोक्तिः का. मु. पु.।

अत्रापि—'**विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव । प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥**' ( वि. पु. ६।७।९१ ) इति परब्रह्मध्यानात्—आत्मा परब्रह्मवत्प्रक्षीणाशेषभावनः—कर्मभावना-ब्रह्मभावना-उभयभावनेति भावनात्रयरहितः प्रापणीय इत्यभिधाय—'**क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज । निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तयेत् ॥**' ( वि. पु. ६।७।९२ ) इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या—कृतकृत्यत्वेन निवृत्तिवचनात्—यावत्सिद्ध्यनुष्ठेयमित्युक्त्वा, '**तद्भावभावमापन्नस्तदासौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥**' ( वि. पु. ६।७।९३ ) इति मुक्तस्य स्वरूपमाह । तद्भावः—ब्रह्मणो भावः—स्वभावः, न स्वरूपैक्यम्; तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात्, पूर्वोक्तार्थविरोधाच्च । यद्ब्रह्मणः प्रक्षीणाशेषभावनत्वं तदापत्तिः—तद्भावभावापत्तिः । यदैवमापन्नस्तदासौ परमात्मनाऽभेदी भवति—भेदरहितो भवति । ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः । तदन्वयोऽस्य कर्मरू-

---

युगादिषु' इत्यादिप्रयोगो भारतादिषु द्रष्टव्यः । दृष्टान्ते प्रकारैक्येऽपि तत्ताव्यवहारो मुख्योऽप्यस्वरसः, पूर्वदृष्टे गवि व्यक्त्यंशप्रहाणादस्वारस्यं, जात्यंशस्य सौसादृश्यलक्षणैक्यान्मुख्यत्वम् । दार्ष्टान्तिके तु 'गङ्गायां घोष' इति गङ्गापदवत्—कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात्, परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च—प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटिरित्यभिप्रायेण **मुख्यगुण एवे**त्युक्तम् । लाक्षणिकगङ्गापदवन्नात्यन्तामुख्य इत्यर्थः । न हि मुक्तस्यापरिच्छिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणं बृहत्त्वं, स्वरूपबृहत्त्वं चास्ति । आकारैक्येऽपि तत्ताव्यवहारस्यात्यन्तामुख्यत्वाभावे—**सोऽयं गौ**रिति दृष्टान्तः ॥

न केवलं योगसंग्रहारम्भे, विस्तरेऽप्यव्यवहितेषु पूर्वश्लोकेषु भेदप्रतिपत्तिरस्तीत्याह—**अत्रापीति** । न केवलं मुक्तविषयप्रकरणान्तरेषु, अस्मिन् प्रकरणेऽपीति वार्थः । अस्मिन् श्लोके **तथैवे**ति ब्रह्मसाधर्म्योपदेशो उपयुज्यते । **तथैवे**त्येतद्व्याख्यानं **परब्रह्मव**दित्यादि । **प्रक्षीणाशेषभावन**शब्दं व्याचष्टे—**कर्मभावनेति** । परब्रह्मवत्**प्रक्षीणाशेषकर्मभावन** इति पाठे **कर्म**शब्दो यागादिक्रियोपासनासाधारणोऽनुष्ठेयमात्रपरः । तदा **कर्म**शब्देन **त्रिविधा भावभावने**त्यत्र भावशब्दो व्याख्यातो भवति । अत्रायमर्थः—प्राप्यपरब्रह्मविषयज्ञानस्य प्रापकत्वात्—शुद्धस्वस्वरूपमपि प्राप्यमिति—तदनुसंधेयमिति । अयंच **व्यतिरेकस्तद्भावभावित्वा**दित्यधिकरणार्थः; तत्र **बद्धस्वरूपं चिन्त्य**मिति पूर्वपक्षीकृत्य **मुक्तस्वरूपं चिन्त्य**मिति हि सिद्धान्तितम् । अस्य श्लोकस्यैकप्रकरणत्वज्ञापनायानन्तरश्लोकोऽपि व्याख्यायते—**क्षेत्रज्ञ इति** । यावत् क्षेत्रज्ञावस्थस्तावत्**करणी** उपासकः, तस्य **करणं** ज्ञानम् । करणभूतं ज्ञानं मुक्तिकार्यं निष्पाद्य निवर्तयेत्, न तु मुक्तेः पूर्वमेव निवर्तयेदित्यर्थः । न हि मुक्तस्योपासननिवृत्तिर्विधेया, अतो यावन्मोक्षमनुष्ठेयत्वमुक्तमिति भावः । **तद्भावभाव**शब्देन ब्रह्मसाम्यापत्तिज्ञापनार्थं, **विभेदजनकेऽज्ञान** इत्यत्र **ज्ञान** इति पदच्छेदशङ्काव्युदासार्थं च—**तद्भावभाव**मिति श्लोको व्याख्यायते । **तद्भावे**ति श्लोके **तद्भाव** इत्युपमानबहुव्रीहिः । तद्भाव इति पदान्तर्गतौ तच्छब्दभावशब्दौ व्याख्यातुमाह—**तद्भाव इति** । भाष्यस्थस्तद्भावशब्दो न बहुव्रीहिः, किंतु तत्पुरुषः । समासे व्याचिख्यासिते सति हि बहुव्रीहिविशिष्टरूपेण पदोपादानं, **तच्छब्दभाव**शब्दमात्रस्य व्याचिख्यासितत्वात्—बहुव्रीहिविशिष्टरूपेण पदस्यानुपादानम् । **तच्छ**ब्देन ब्रह्मोच्यते, प्रथम**भाव**शब्देन स्वभाव उच्यत इत्यर्थः । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु । पदार्थमात्रे सत्तायामात्मयोनिस्वभावयो' रिति नैघण्टुकाः । यद्वा, भाष्यस्थ**तद्भाव**शब्दोऽपि बहुव्रीहिविशिष्टः । **तद्भावो** ब्रह्मणो भावः, **स्वभाव** इति पदे **तच्छ**ब्दवाच्यब्रह्मसंबन्धितया प्रतिपन्नो भावः—स्वभाव इत्यर्थः । अथवा, श्लोकेऽपि **तद्भाव**शब्दस्तत्पुरुषः, द्वितीयभावशब्दः सत्तावाची । व्यावर्त्यमाह—**नत्विति** । कुत इत्यत्राह—**तद्भावेति** । हेत्वन्तरमाह—**पूर्वोक्तार्थविरोधाच्चेति** । हेयप्रत्यनीकत्वहेयार्थत्वादिविरोधोऽर्थविरोधः । एवं शब्दपर्यालोचनया, अर्थपर्यालोचनया च **भाव**शब्दस्य स्वभाववाचित्वमुपपादितम् । स्वभावशब्दवाच्यं च पूर्वश्लोकोक्तं प्रक्षीणाशेषभावनत्वमित्याह—**यदिति** । तच्छब्दसामर्थ्याद् **यद्वृत्त**माक्षिप्य व्याचष्टे—**यदैवमिति** । **अभेदी**त्यत्र **भेद**शब्दव्याख्यानार्थं भेदशब्दं नञ्प्रत्ययाभ्यां विभज्य निर्दिशति—**भेदरहितो भवतीति** । यद्वा, **भेदरहितो भवति** न तादात्म्यवानिति भावः; अन्यथा **भेदश्च तस्याज्ञानकृत** इत्यनन्तरनिर्देशो न घटते । देवादिभेदाभावः कथमिति शङ्कायां **भेदश्च तस्ये**त्यादि व्याचष्टे—**ज्ञानैकाकारतयेति** । **परमात्मना भवत्यभेदी**ति परमात्मनः प्रस्तुतत्वात्, **आत्मनो ब्रह्मण** इत्यत्रापि पञ्चमीविवक्षया च तस्माद्भेद इत्युक्तम् । ब्रह्मणः मुक्तात्मनश्चाकारान्तरेण भेदस्य प्रमाणसिद्धत्वात्, निरसनीयभेदविशेषस्य वचनान्तरसिद्ध-

पाज्ञानमूलः, न स्वरूपकृतः । स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्तत इति—अभेदी भवति । यथोक्तम्—**'एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः । देवादिभेदेऽपध्वस्ते नास्त्यनावरणो हि सः ॥'** इति । एतदेव विवृणोति—**'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥'** ( वि. पु. ६।७।९४ ) इति । विभेदः—विविधो भेदः देवतिर्यङ्मनुष्यस्थावरात्मकः । यथोक्तं शौनकेनापि—**'चतुर्विधो विभेदोऽयं मिथ्याज्ञाननिबन्धनः ।'** ( विष्णुधर्मे ) इति । आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकं नाशं गते सति—हेत्वभावादसन्तं परस्माद्ब्रह्मण आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः । **'अविद्या कर्मसंज्ञान्या'** ( वि. पु. ६।७।६१ ) इति ह्यत्रैवोक्तम् । **'क्षेत्रज्ञं चापि मां विद्धि'** ( गी. १३।२ ) इत्यादिनान्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधानम्; अन्यथा **'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः'** ( गी. १५।१६ ) इत्यादिभि-

---

त्वाच्च—**भेदो देवादिरूप** इत्युक्तम् । **कर्मरूप**शब्देन **अज्ञान**शब्दो व्याख्यातः । ज्ञानविरोधीति व्युत्पत्तिरित्यर्थः । 'अविद्यया मृत्युं तीर्त्वे'ति हि श्रुतिः । अत्रा'प्यविद्या कर्मसंज्ञाऽन्ये'ति हि पठ्यते । ततः किं भेदराहित्यस्येति शङ्कायां—**भेदश्च तस्याज्ञानकृतो भवे**दित्यनेनार्थसिद्धमभिप्रेतकारणाभावं विशदयन् कार्याभावमुपपादयति—**स त्विति** । भेदस्य देवादिरूपत्वे, अज्ञानशब्दस्य च कर्मपरत्वे प्रमाणमाह—**यथोक्तमिति** । आदिभरतचरितेऽयं श्लोकः । तत्र पूर्वं देहेन्द्रियादिबाह्यभेदरहितत्वमात्मन उक्तं—**सितनीले**त्यादिना, अस्मिन् श्लोके बुद्धिसुखदुःखेच्छाद्यान्तरभेदोऽपि नास्तीत्युच्यते—**एकस्वरूपेति** । कर्मैव वृतिः **कर्मवृतिः** । बाह्यमान्तरं च कर्म द्विविधम्—आन्तरमात्मप्रावण्यहेतुः कर्म, बाह्यं बहिर्विषयप्रावण्यहेतुः कर्म । यद्वा, बाह्यमस्वाभाविकं कर्म–तदेव वृतिः । तया प्रकर्षेण जात एकस्वरूपभेदः बाह्यकर्मशरीरद्वारकमेकस्वरूपस्यात्मन आन्तरं भेदं करोतीत्यर्थः । द्वारभूतदेवादिशरीरभेदे नष्टे सति आन्तरभेदो नास्ति, कथं वा देवादिभेदे नष्टे कर्मवृतिहेतुकान्तरभेदनाश इत्यत्राह—**अनावरणोहि स इति । सः** निवृत्तदेवादिभेदः आत्मा, कर्मावरणरहितो हीत्यर्थः । यद्वा, **कर्मवृतिः** कर्मजन्या वृतिः—देवादिशरीरं, तत्संबन्धज आन्तरभेदः, देवादिभेदेऽपध्वस्ते स नास्ति, कथं कर्मजन्यवृतिहेतुकान्तरभेदो देवादिभेदापध्वंसे नास्तीत्याह—**अनावरणो हि स इति । कर्मजन्यवृति**र्देवादिशरीरभेदरूपेत्यर्थः । **एतदेव–भेदश्च तस्याज्ञानकृतो भवे**दित्युक्तमेवार्थं विवृणोतीत्यर्थः । **विभेदजनक** इत्यादिश्लोकेना'नावृत्तिः शब्दा'दित्यधिकरणार्थ उच्यते । परस्माद्ब्रह्मण आत्मनो देवादिभेदस्य प्रणष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यते । **विभेद**शब्दं व्याचष्टे—**विभेदो विविधो भेद इति** । भेदस्य देवादिरूपत्वे प्रमाणान्तरमाह—**यथोक्तमिति । मिथ्याज्ञाननिबन्धनः** मिथ्याज्ञानम्–आत्मविषयभ्रान्तिज्ञानं, तत्कर्मद्वारा उत्तरोत्तरदेवादिभेदहेतुरित्यर्थः । अस्योत्तरार्धं 'देवतिर्यङ्मनुष्याख्यस्तथैव नृप नारक' इति व्याख्येयस्य श्लोकस्य वाक्यार्थमाह—**आत्मनीति । ब्रह्मण** इति पदस्य पञ्चम्यन्तत्वसूचनाय **परस्मादि**त्युक्तम् । उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तं; **च**शब्दाभावात्, अनन्तरपूर्वश्लोके **परमात्मना भवत्यभेदी**ति परमात्मनः प्रतियोगितया निर्देशाच्च । अत एव समानाधिकरणषष्ठ्यन्तत्वमप्ययुक्तम् । पूर्वप्रपञ्चितात्, अर्थविरोधाच्च—पञ्चम्यन्तत्वं, षष्ठ्यन्तत्वं च विपर्ययेण स्यादिति—चेन्न; तदा परब्रह्मणोऽपि हेयार्थत्वापत्तेः—स्वाभाविकत्वप्रसङ्गात् । अतः **परस्मात् ब्रह्मण** इत्युक्तम् । **असन्तं** **स**च्छब्दः परमार्थपर्यायः; 'अनाशी परमार्थश्चे'त्यत्रैव ह्युक्तम्, अनित्यमित्यर्थः । तेन स्वाभाविकनित्यभेदव्यावृत्तिः । अनित्यत्वं कादाचित्कत्वम् । अनित्यत्वाधेयत्वापेक्षो देवादिभेदः तं कः करिष्यति, न कश्चिदपि; **हेत्वभावात्** कर्मरूपहेत्वभावादित्यर्थः । न केवलमेकार्थविषये **बाह्यकर्मवृतिप्रजः अज्ञानकृतो भवे**दिति अज्ञान–कर्मशब्दयोः प्रयोगादज्ञानशब्दस्य कर्मार्थत्वम्, अस्मिन् प्रकरणे च कण्ठोक्तमित्याह—**अविद्या कर्मसंज्ञाऽन्येति । अत्रैवोक्त**मिति—आत्मन औपाधिकभेद उपाध्यपगमेन नश्यतीति श्लोकार्थः, उपाध्यभावादविद्यमानं भेदं क उत्पादयेदिति वाऽर्थः । अयं श्लोको मृषावादिनामत्यन्तास्वरसः, तथा हि—**विभेदजनक** इत्यत्र **जनक**शब्दः उत्पादके स्वरसः, न त्वध्यासहेतौ । **अज्ञान**शब्दस्य अनिर्वचनीयपरत्वं लोकतः, शास्त्रतश्च न व्युत्पन्नम् । कर्मवाचित्वव्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता । **नाश**शब्दस्य बाधवाचित्वमसुख्यम् । **असन्त**मिति पदं च व्यवच्छेद्याभावादफलम्; सतो भेदस्यानभ्युपगमात्, तदभ्युपगमे हि तत्साफल्यम् । **करिष्यती**ति पदमप्यस्वरसम्, अध्यासवाचित्वाभावात् ॥

अथाद्वैतपरत्वेन परोक्तं गीतावचनं व्याचष्टे—**क्षेत्रज्ञं चापीति** । पराभिमतार्थस्य पूर्वापरविरोधं दर्शयति—**अन्यथेति** ।

विरोधः । अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताभिहितम्—**'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।'** ( गी. १८।६१ ), **'सर्वस्य चाहं हृदि सन्निविष्टः'** ( गी. १५।१५ ) इति च । **'अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।'** ( गी. १०।२० ) इति च तदेवोच्यते । भूतशब्दो ह्यात्मपर्यन्तदेहवचनः । यतः सर्वेषामयमात्मा—तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते—**'न तदस्ति विना यत्स्यात्'** ( गी. १०।३९ ) इति । भगवद्विभूत्युपसंहारश्चायमिति तथैवाभ्युपगन्तव्यम् । तत इदमुच्यते—**'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥' 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।'** ( गी. १०।४१-४२ ) इति । अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति । नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम् । नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः । यदप्युच्यते—निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितमीश्वरेशितव्याद्यनन्तविकल्पं सर्वं जगत्, दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयानाद्यविद्या, सा चावश्याभ्युपगमनीया; **'अनृतेन हि प्रत्यूढाः'** ( छा. ८।३।२ ) इत्यादिभिः श्रुतिभिः, ब्रह्मणस्तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च । सा तु न सती; भ्रान्तिबाधयोरयोगात् । नाप्यसती; ख्यातिबाधयोश्चायोगात् । अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद्—इति, तदयुक्तम्; सा हि किमाश्रित्य भ्रमं जनयतीति वक्तव्यं, न तावज्जीवमाश्रित्य; अविद्यापरिकल्पितत्वाज्जीवभावस्य । नापि ब्रह्माश्रित्य; तस्य स्वयंप्रकाशज्ञानरूपत्वेनाविद्याविरोधित्वात् । सा हि

---

न केवल**मुत्तमः पुरुषस्त्वन्य** इति भेदप्रतिपादनात्तद्विरोधेन स्वरूपैक्यपरत्वाभावः, सामानाधिकरण्योपपादकमन्तर्यामित्वं कण्ठोक्तमपीत्याह—**अन्तर्यामीति** । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती' त्यत्र भूतशब्दस्यात्मपर्यन्तदेहपरत्वं—'भ्रामयन् सर्वभूतानी'त्यस्योत्तरार्धेनावगम्यते; 'न हिंस्यात्सर्वाभूतानी'त्यादिप्रयोगाच्च । 'सर्वस्य चाहं हृदि सन्निविष्ट' इत्यत्रापि सर्वशब्दस्यात्मपर्यन्तत्वं—'मत्तः स्मृतिर्ज्ञानमपोहनं चे'त्यनेनावगम्यते । **हृद्देशे** हृद्देशस्य आत्मनीत्यर्थः । **सर्वस्य चाहं हृदी**त्यपि तथा । तथा**ऽहमात्मा गुडाकेशे**त्यत्राप्यन्तर्यामित्वपरतामाह—**अहमिति** । कुत इत्यत्राह—**भूतशब्दोहीति** । पूर्वं दर्शितसर्वशब्दैकार्थ्याच्चेति भावः । अन्वयरूपेणोक्तस्य सर्वेषां भगवदात्मकत्वस्य शेषभूतोऽयं **न तदस्तीति** व्यतिरेकनिर्देशस्तदनुगुण एवेत्यभिप्रायेणाह—**यतः सर्वेषामिति** । **अविनाभाव**शब्दस्य संबन्धनियमवाचित्वादिति भावः । हेत्वन्तरमाह—भगवदिति । 'एतां विभूतिं योगं चे' ति प्रक्रमाद्विभूतिपरत्वमवगम्यते, अतः उपक्रमानुगुण एव उपसंहार इत्यर्थः । न हि विभूतित्वं विधाय तदेव निषेद्धुं शक्यमिति भावः । प्रकरणस्य विभूतिपरत्वं दर्शयति—**यद्यदिति** । **विभूतिमत्** नियाम्यवत् । **श्रीमत्** भोग्यसमृद्धिमत् । **ऊर्जितं** बलवत्, कल्याणगुणारम्भेषु ह्युक्तम् । **तेजः** पराभिभवनसामर्थ्यं **प्रशासनम् । तेजोंऽशसम्भवं** नियमनशक्तिमत्, आज्ञात्ववाधीनमित्यर्थः । शास्त्रस्य परोक्तार्थपरत्वाभावमुपसंहरति—**अत इति** । **अतः** श्रुतियोजनाप्रभृतिप्रतिपादितैर्न्यायैरित्यर्थः । **भ्रान्तत्वं** भ्रान्तिसिद्धत्वम् । जगद्ब्रह्मणोरेकद्रव्यत्वपक्षे–ब्रह्मणः सविशेषत्वं, जगतः सत्यत्वं चोपपन्नमिति शङ्कायां तद्व्युदासार्थमाह—**नापीति** । चेतनेष्वचिद्धर्मबुद्धिः, परतन्त्रेषुः, स्वतन्त्रबुद्धिश्च भ्रमः, न तु स्वरूपभेदधीरित्यभिप्रायेण **न स्वरूपभेदनिषेध** इत्युक्तम् । अथवा मृषावादिनमेवोद्दिश्य जीवपरयोः स्वरूपभेदनिषेधाभावमाह—**नापीति** । अचिदुपादनं दृष्टान्ततया । **इति निर्विशेषपरतया पराभिमतस्मृतिपुराणाद्यर्थनिर्णयः ॥**

अथाविद्यां दूषयितुं तद्विषये परोक्तमर्थमनुवदति—**यदपीति** । निर्विशेषस्य कथं भ्रमसंभव इत्यत्राह—**दोषेति** । ब्रह्माव्यतिरिक्तदोषोऽस्ति चेत्, अद्वैतहानिरित्यत्राह—**दोषश्चेति** । अस्मिन्नर्थे परोक्ताः श्रुतिस्मृत्यर्थापत्तीर्दर्शयति—**अनृतेनेति** । सदसद्विलक्षणत्वमुपपादयति—**सात्विति** । **भ्रान्तिबाधयोरयोगात्** भ्रान्तिविषयत्वबाधविषयत्वयोरयोगात्, प्रमितिभ्रान्तिबाधान्यथानुपपत्त्या सदसदनिर्वचनीयत्वमित्यर्थः । **सद्भाव एवं भवतो मयोक्त** इतिवन्न परमतमिति दर्शयितुं **तत्त्वविद्** इत्युक्तम् । दूषयति—**तदयुक्तमिति** । **इत्यविद्याविषये परोक्तस्य दूषणम् ॥**

आश्रयानुपपत्ति–तिरोधानानुपपत्ति–स्वरूपानुपपत्त्य–निर्वचनीयत्वानुपपत्ति–प्रमाणानुपपत्ति–निवर्तकानुपपत्ति–निवृत्त्यनुपपत्तिमिर्दूषयिष्यन्, प्रथममाश्रयानुपपत्तिस्वरूपमाह—**सा हीति** । **किमाश्रित्य** न किंचिदपीत्यर्थः । किं जीवमाश्रित्य,

ज्ञानबाध्याभिमता। 'ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्। अज्ञानं चेत्तिरस्कुर्यात्कः प्रभुस्तन्निवर्तने ॥ ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम्। ब्रह्मवत्तत्प्रकाशत्वात्तदपि ह्यनिवर्तकम्॥ ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता। ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते ॥' (नाथमुनिसूक्तयः)। ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकं, न स्वरूपभूतं ज्ञानमिति चेन्न; उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सत्यन्यतरस्याविद्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात्। एतदुक्तं भवति—ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते स ब्रह्मणः स्वयंप्रकाशत्वेन—स्वयमेव प्रकाशत इत्यविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति। किंच—अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति, अतो ज्ञानमज्ञानविरोधि चेत्स्वयमेव विरोधि भवतीति—नास्या ब्रह्माश्रयत्वसंभवः शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनस्तन्निवर्तने ज्ञानान्तरमपेक्षन्ते, ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव। तत एव निवर्तकान्तरं च नापेक्षते। अथोच्येत—ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधि—इति,

---

उत ब्रह्मेति—विकल्पाभिप्रायेणाह—**न तावदिति**। जीवे सिद्धे—अविद्यासिद्धिः, अविद्यासिद्धौ जीवसिद्धिः—इत्यन्योन्याश्रय इत्यर्थः। जीवाज्ञानवादनिरास उत्तरत्र विस्तरेण वक्ष्यत इति—अत्र संक्षेपः। अथ ब्रह्माश्रयपक्षं दूषयति—**नापीति**। विरोधित्वं कथमित्यत्राह—**सा हीति**। ब्रह्मविषयाज्ञानस्य तत्प्रकाशबाध्यत्वाद्**विरोधः**। अत्र **नाथमुनिभि**रुक्तान् श्लोकानाह—**ज्ञानरूपमिति**। स्वप्रकाशत्वं विवक्षितम्। ज्ञाननिवर्त्यत्वे हेतुमाह—**मृषात्मकमिति**। न हि स्वरूपज्ञानमज्ञानविरोधि, अपि तु प्रमाणज्ञानमेवेति पक्षमनूद्य दूषयति—**ज्ञानमिति**। **ब्रह्मवत्तत्प्रकाशत्वात्** स्वरूपानतिरिक्तप्रकाशत्वादित्यर्थः। नहि शुक्लभास्वरद्रव्ये गृहीते आप्तवाक्यादिभिः शुक्लभास्वरद्रव्यमित्येतावति शतशः प्रतिपन्नेऽपि भ्रमनिवृत्तिः। दूषणान्तरं चाह—**ज्ञानमिति**। ततः किमित्यत्राह—**ब्रह्मण इति**। एषु श्लोकेषु प्रथमश्लोकस्यार्थः पूर्वं **ज्ञानबाध्याभिमते**त्यन्तेन भाष्येणोक्तः। द्वितीयश्लोकं व्याचष्टे—**ज्ञानस्वरूपमिति**। **ब्रह्मस्वरूपप्रकाशत्वे सति** स्वरूपविषयज्ञानत्वे सतीत्यर्थः। **विशेषानवगमात्** विषयवैषम्याभावादित्यर्थः। कथं विशेषानवगमः, प्रमाणजन्यत्वं विशेषोऽस्तीति चेत्—किं तेन, विषयवैषम्यं हि न विद्यते। किं स्वरूपभूतज्ञानान्निवर्तकज्ञानस्य विषयवैषम्यमस्ति वा, न वा। अस्ति चेत्, विशेषत्वम्। नो चेत्, स्वरूपमेव निवर्तकं स्यात्, प्रमाणजन्यज्ञानमनिवर्तकं वा स्यात्। पुरोऽवस्थितभास्वरवस्तुविषयज्ञानवत्—प्रमाणजन्यज्ञानत्वं न निवर्तकत्वे प्रयोजकम्; 'इदं शुक्लभास्वरद्रव्यमिति वाक्यजन्यस्य ज्ञानस्य निवर्तकत्वाभावात्। तस्मात् भ्रमसहाकारादतिरिक्ताकारविषयत्वं निवर्तकत्वे प्रयोजकम्॥

ननु—विषयवैषम्याभावेऽपि कस्यचित् ज्ञानस्य भ्रमाविरोधित्वं, कस्यचिद् भ्रमविरोधित्वं च दृष्टमभिज्ञाप्रत्यभिज्ञयोः, अयमेको देवदत्त इत्यभिज्ञाया ऐक्यविषयत्वेऽपि 'पूर्वदृष्टादयमन्य' इति पुरुषद्वित्वभ्रमो दृष्टः, प्रत्यभिज्ञायास्तु 'सोऽयमेको देवदत्त' इति देवदत्तैक्यविषयत्वेऽपि द्वित्वविरोधित्वं दृष्टमिति—विषयवैषम्याभावेऽपि प्रमाणज्ञानस्य भ्रमनिवर्तकत्वं युक्तमिति शङ्कायामाह—**एतदुक्तमिति**। सत्यत्वज्ञानत्वादिस्वभावोऽस्तीति चेत्, स च स्वरूपानतिरिक्त इति दर्शयितुं **स्वभाव**शब्दः। अनेनाभिज्ञाप्रत्यभिज्ञयोरपि विषयवैषम्यमुक्तं भवति। अभिज्ञायामेकस्य धर्मिण एकदेशकालसंबन्धित्वं प्रतिपन्नं, न तु कालद्वयदेशद्वयसंबन्धित्वं, तत्तु प्रत्यभिज्ञायां प्रतिपन्नम्। एकदेशकालसंबन्धित्वप्रतीतिर्न द्वित्वविरोधिनी; एकस्य धर्मिणः कालद्वयसंबन्धित्वं देशद्वयसंबन्धित्वं ह्यैक्यं, तत्तु द्वित्वविरोधीति तत्प्रतिपत्तिर्द्वित्वभ्रमं निवर्तयति, अतस्तत्रापि विषयवैषम्यमस्तीति फलितम्। अथ—तृतीयश्लोकार्थस्य विपर्यये पर्यवसानमाह—**किंचेति**। प्रमाणज्ञानत्वं निवर्तकत्वव्यापकम्, अतोऽधिष्ठानभूतब्रह्मस्वरूपस्य प्रमाणज्ञानत्वाभावान्न भ्रमनिवर्तकत्वम्। अधिष्ठानत्वात् शुक्त्यादिवत्—ब्रह्मस्वरूपं न भ्रमविरोधीति प्रमाणान्तरज्ञानमपेक्षत इति शङ्कायामाह—**शुक्त्यादयस्त्विति**। अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वं व्यापकम्, अतो व्यापकनिवृत्त्याऽधिष्ठानत्वनिवृत्तिः। अधिष्ठानत्वादेव ब्रह्मस्वरूपस्फुरणेऽपि प्रमाणान्तरमपेक्ष्येत, नैवं; जडत्वादेव शुक्त्यादेः स्वरूपस्फुरणेऽपि प्रमाणान्तरापेक्षा, नाधिष्ठानत्वात्, अतोऽधिष्ठानत्वं सोपाधिकम्। अत्रत्वजडत्वात्स्वरूपस्फुरणे प्रमाणान्तरापेक्षा नास्तीति चेत्, तर्हि—जडत्वादेव भ्रमनिवृत्तौ शुक्त्यादेर्ज्ञानान्तरापेक्षा, नाधिष्ठानत्वात्, अतस्तत्सोपाधिकं, तस्मादजडे तु प्रमाणान्तरापेक्षा भ्रमनिवृत्तौ च न स्यादित्यभिप्रायः। **शुक्त्यादयस्त्वि**त्यत्र **तु**शब्दो ब्रह्मणः शुक्त्यादिव्यावृत्तिपरः। द्वयी ह्यद्वैतिनां गतिः—ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्तकं, प्रपञ्चमिथ्यात्वविषयज्ञानं भ्रमनिवर्तकमिति च, तत्र प्रथमपक्षो दूषितः, अथ द्वितीयपक्षं दूषयितुं शङ्कते—**अथोच्येतेति**। दूषयति—**नेत्यादिना**।—**इदमिति**।

न; इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं—किं ब्रह्मयाथात्म्याज्ञानविरोधि, उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम् । न तावद्ब्रह्मयाथात्म्याज्ञानविरोधि; अतद्विषयत्वात् । ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः । प्रपञ्चमिथ्यात्वज्ञानं च तत्सत्यत्वरूपाज्ञानेन विरुध्यते, तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव । ब्रह्मस्वरूपाज्ञानं नाम–तस्य सद्वितीयत्वमेव[1], तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तं, स्वरूपं तु स्वानुभवसिद्धमिति—चेन्न; ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति—तद्विरोधि सद्वितीयत्वरूपाज्ञानं, तद्बाधश्च न स्याताम् । अद्वितीयत्वं धर्म इति—चेन्न; अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैवोपपादित्वात् । अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव–नाज्ञानाश्रयत्वम् । किंच—अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितम्–इति वदता स्वरूपनाश एवोक्तः स्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः, विद्यमानस्य विनाशो वा । प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन–प्रकाशतिरोधानं प्रकाशनाश एव । अपिच—निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवति–इत्यत्र किमयं स्वाश्रयदोषः—परमार्थभूतः, उतापरमार्थभूत–इति विवेचनीयम् । न तावत्परमार्थः; अनभ्युपगमात् । नाप्यपरमार्थः; तथा

---

**प्रपञ्चसत्यत्वरूपाज्ञानेति** । ननु—कथं प्रपञ्चसत्यत्वमज्ञानमित्युच्यते, अज्ञानं हि ज्ञानप्रतिबन्धकं, न हि प्रपञ्चसत्यत्वं कस्यचित् ज्ञानं प्रतिबध्नाति, सत्यम्, आच्छादकाज्ञानमेवंभूतं; प्रपञ्चसत्यत्वं, तत्प्रतिभासश्च विक्षेपरूपाज्ञानमिति पराभ्युपगमादेवमुक्तम् । प्रथमं शिरो दूषयति—**अतदिति** । कथमतद्विषयत्वात् ब्रह्मस्वरूपाज्ञानविरोधित्वमित्यत्राह—**ज्ञानाज्ञानयोरिति** । विरोधे हि निवृत्तिरित्यर्थः । द्वितीयं शिरो दूषयति—**प्रपञ्चेति** । प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञाननिवृत्तेः । फलितत्वमाशङ्कते—**ब्रह्मस्वरूपेति । सद्वितीयत्वं** सद्वितीयत्वज्ञानमित्यर्थः । नहि सत्तया सद्वितीयत्वं ब्रह्मस्वरूपाज्ञानं भवति; अपारमार्थ्यात् । सद्वितीयत्वविशिष्टब्रह्मगोचरज्ञाने निवृत्ते विशेष्यांशगोचरमपि ज्ञानं निवृत्तमिति स्वरूपसिद्धिः कथमित्यत्राह—**स्वरूपंत्विति** । दूषयति—**नेति** । अद्वितीयत्वं किं स्वरूपम्, उत धर्म इति विकल्पाभिप्रायेण प्रथमं स्वरूपपक्षं दूषयति—**नेति** । धर्मपक्षे अपसिद्धान्तमाह—**अद्वितीयत्वमिति** । आश्रयानुपपत्तिं निगमयति—**अत इति । विरोधादेव** पूर्वोक्तादेवेत्यर्थः । एवमाश्रयानुपपत्तिरुक्ता ॥ **इत्यविद्यादूषणे आश्रयानुपपत्तिः** ॥

अथ तिरोधानानुपपत्तिमाह—**किंचेति** । ननु—भवत्पक्षेऽपि क्षेत्रज्ञानां नित्यं स्वरूपस्फुरणमस्तीति—तथापि तेषां स्वरूपतिरोधानेन विना न देहात्मभ्रम इति—तुल्याऽनुपपत्तिः, सत्यं, स्वरूपस्फुरणमस्त्येव, न तस्य तिरोधानमभ्युपगम्यते । नच स्वरूपस्फुरणं भ्रमविरोधि, किंतु नित्यत्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि, तान्यागमगम्यानि, तेषां **तिरोधि**स्तद्विषयज्ञानप्रसराभावरूपः संकोचः, अतः स्वरूपातिरिक्ताकारान्तरतिरोधानानभ्युपगमान्नात्मनो नाशप्रसङ्गः । ज्ञानस्यात्मासाधारणाकारस्य स्फुरणात् भ्रमानुपपत्तिरिति—चेन्न; तस्यासाधारणत्वास्फुरणात् । असाधारणतया स्फुरतो धर्मस्य हि भ्रमविरोधित्वं दृष्टं, यथा—शुक्तित्वादेः; शुक्तित्वं हि शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चात् भ्रमं निवर्तयति । नतावज्ज्ञानं देहातिरिक्तात्मासाधारणधर्मत्वेन क्वचिद्दृष्टचरम्, अतो भ्रमः संभवति । आत्मासाधारणधर्मत्वादर्शनादध्यासः, अध्यासादसाधारणधर्मत्वाग्रहणम्–इत्यन्योन्याश्रयो**ऽनादितया** परिहृतः । धर्मभूतज्ञानस्य नित्यत्वं, तिरोधानं च भवद्भिरभ्युपगम्यते तदा ज्ञाननाशप्रसङ्ग इति—चेन्न; ज्ञानं हि द्रव्यं तस्य स्वरूपातिरेकेण संकोचविकासात्मकमवस्थाद्वयमभ्युपेत्यम्, अतस्त**त्तिरोधानं** कर्मणा तत्संकोचः, तन्निवृत्तिस्तु प्रसरः, स एव प्रकाशः, स चानित्यः । तस्य नित्यत्वेऽपि–नित्यस्य ज्ञानद्रव्यस्य स्वप्रकाशत्ववादः स्वप्रकाशनरूपप्रसरणार्हत्वनिबन्धनः । अतोऽवस्थाद्वयस्यागमापायित्वात्—द्रव्यं नित्यमेव । अस्मदवस्थास्थानीयो हि भवतः स्वप्रकाशः, स एव स्वरूपं, तस्मा**त्तिरोधानं** तन्निवृत्तिरेवेतीममर्थमभिप्रेत्य—**प्रकाशैकस्वरूपं ब्रह्मे**त्युक्तम् । अतः स्वरूपातिरेकिप्रकाशतिरोधानाख्यावस्थाद्वयानभ्युपगमात्–स्वरूपनाश एव तिरोधानं स्यादित्यर्थः ॥ **इति तिरोधानानुपपत्तिः** ॥

अथ स्वरूपानुपपत्तिमाह—**अपि चेति** । ज्ञातृत्वादीनामपरमार्थतया हि दोषान्तरापेक्षा तद्वदिहापीति–दृष्टान्ततया वक्ष्यमाणानवस्थोपयोगित्वेन–**निर्विषये**त्यादिपरिपाटीप्रकटनं कृतम् । यद्वा, विषयाश्रयभेदानामसत्त्व–प्रतिभासयोरुक्तिर्दोषकल्पनाकारणत्वेन कृता; अनभ्युपगमादिति । परमार्थत्वे ह्यद्वैतहानिप्रसङ्ग इति भावः । अपरमार्थपक्षं दूषयितुं कोटित्रयमेव संभावितमित्याह—**तथासतीति** । अपरमार्थत्वान्मूलदोषान्तरापेक्षया**ऽनवस्थे**ति दूषणं कोटित्रयस्यापि साधारणं,

---

१ °त्वज्ञानमे° ।

सति हि—द्रष्टृत्वेन वा, दृश्यत्वेन वा, दृशित्वेन वाभ्युपगमनीयः । न तावद्दृशिः; दृशिस्वरूपभेदानभ्युपगमात्, भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेन—अपारमार्थ्यानभ्युपगमाच्च । द्रष्टृ—दृश्ययोः तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयानवस्था स्यात् । अथैतत्परिजिहीर्षया—परमार्थसत्यनुभूतिरेव ब्रह्मस्वरूपा दोष इति चेत्, ब्रह्मैव चेद्दोषः प्रपञ्चदर्शनस्यैव तन्मूलं स्यात्, किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन । ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेन—अनिर्मोक्षश्च

---

दृशित्वपक्षेऽधिकदूषणमस्तीति दर्शयति—**न तावदिति** । किमनवच्छिन्ना दृशिः, उतावच्छिन्ना । दृशेरनवच्छिन्नत्वे किं स्वरूपातिरिक्ता, स्वरूपमेव इति विकल्पमभिप्रेत्य, अनवच्छिन्नपक्षे स्वरूपव्यतिरिक्तपक्षं दूषयति—**दृशिस्वरूपभेदानभ्युपगमादिति** । अनवच्छिन्नदृशिद्वयानभ्युपगमादित्यर्थः । अनवच्छिन्नपक्षे—स्वरूपदृशित्वपक्षं दूषयति—**भ्रमेति** । अवच्छिन्नदृशिदूषणत्वेन[1] वक्ष्यमाणानवस्था अनवच्छिन्नपक्षेऽपि समाना, अत्राधिकदूषणद्वयसद्भावात्सा नोक्ता । अवच्छिन्नदृशित्वेन, द्रष्टृत्वेन, दृश्यत्वेन, चाभ्युपगमं दूषयति—**द्रष्टृदृश्ययोरिति । काल्पनिकत्वेना**परमार्थत्वेनेत्यर्थः । दोषान्तरापेक्षाहेतुरिदं काल्पनिकत्वम् । अवच्छिन्नदृशिपक्षेऽपि स्वरूपतद्व्यतिरिक्तविकल्पे-स्वरूपपक्षेपि तुल्यमनभ्युपगमरूपदूषणं; ब्रह्मस्वरूपस्यावच्छिन्नत्वापारमार्थ्यानभ्युपगमात्, अतोऽवच्छिन्नपक्षे न विकल्पितम् । स्वरूपातिरिक्तपक्षेऽनवस्थोक्ता—**अथैतदिति** । अपरमार्थत्वेऽनवस्था, परमार्थत्वे द्वैतहानिरित्येतद्दोषपरिजिहीर्षयेत्यर्थः । अनुभूतेरेव दोषत्वान्नाद्वैतहानिः, तस्याः पारमार्थ्यान्नानवस्था—इति च भावः । एतद्दूषयति—**ब्रह्मैवेति** । अपारमार्थ्याद्दोषान्तरसापेक्षत्वसाम्यमभिप्रेत्य **प्रपञ्चतुल्य**-शब्द उक्तः । **अतः** प्रतिशिरोऽभिहितैर्दूषणैरित्यर्थः । अनिर्मोक्षप्रसङ्गपरिहाराय **ब्रह्मव्यतिरिक्तत्वम्** । अनवस्थापरिहाराय **पारमार्थिकत्वम्** । परैरनवस्था त्रेधा परिहृता, जीवाज्ञानवादिना बीजाङ्कुरन्यायात्प्रवाहानादित्वेन परिहृता; अविद्याया जीवः—जीवादविद्येति हि तन्मतम् । ब्रह्माज्ञानवादिना स्वरूपानादित्वेन परिहृता, उभाभ्यां च दुर्घटत्वेन परिहृता—दुर्घटत्वमविद्याया भूषणं, नतु दूषणमिति । परमार्थस्य ह्युपपत्त्यपेक्षा, प्रासादनिगरणादिष्वल्पास्येन विपुलप्रासादनिगरणमनुपपन्नम्—इति युक्तिर्न प्रवर्तते, अत **उपपत्तिनिरपेक्षत्व**मपारमार्थ्यसाधकं, दोषस्य स्वरसनिर्वाहकत्वेन, दोषान्तरनैरपेक्ष्याच्च नानवस्थेति । अत्रोच्यते—प्रवाहानादित्वं ब्रह्माज्ञानवादिनैव दत्तोत्तरं—जीवनित्यत्वश्रुतिभिः, अकृताभ्यागमकृतविप्रणाशरूपश्रुत्यर्थापत्त्या च आमोक्षाज्जीवस्य स्थायित्वमिष्टं हीयेतेति । अपारमार्थ्ये स्वरूपानादित्वमपि नानवस्थापरिहारः; तथा सति माध्यमिकपक्षविजयप्रसङ्गात् । तत्राधिष्ठानस्य भ्रान्तिसिद्धत्वे, तस्या भ्रान्तेरधिष्ठानान्तरापेक्षा स्यात्, तस्यापि भ्रान्तिसिद्धत्वेऽनवस्था—इत्यनवस्थायां ह्यधिष्ठानपारमार्थ्यं साधितं माध्यमिकेन । अपारमार्थ्यादधिष्ठानस्य स्वरूपानादित्वे स्वीकृतेऽनवस्था परिहृता—इत्यधिष्ठानापारमार्थ्यमेव स्यात् । किंच—स्वरूपानादित्वेऽपि मूलदोषापेक्षाऽस्त्येव; जीवस्यानादित्वेऽप्यविद्यापरिकल्पितत्वस्य भवद्भिरङ्गीकृतत्वात् । दुर्घटत्वं चानुपपन्नं; दुर्घटत्वं नाम—उपपत्तिनिरपेक्षत्वं, तदपारमार्थ्यसाधकं चेत्—अपरमार्थस्य प्रपञ्चस्य दुर्घटत्वेनोपपत्तिनिरपेक्षत्वात्—मूलदोषापेक्षा च न स्यात् । निवर्तकज्ञाने सत्यपि साऽवतिष्ठेत । विरोधान्न तिष्ठतीति चेत्, तर्ह्युपपत्त्यनुवर्तिन्यविद्या स्यादिति—परमार्थत्वप्रयुक्तोपपत्तिरपरमार्थत्वप्रयुक्तोपपत्तिरिति द्विविधोपपत्तिः । तत्र दुर्घटत्वं नाम—परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वम् । अपरमार्थत्वप्रयुक्तोपपत्तिर्हि दोषापेक्षा, अतः प्रपञ्चस्य मूलदोषपरिकल्पनं युक्तमिति—चेत्, तर्ह्यपरमार्थत्वप्रयुक्तोपपत्तिरूपदोषापेक्षा अपरमार्थभूतदोषस्यापि स्यात्, ततोऽनवस्था तदवस्थैव । दुर्घटत्वमनवस्थापरिहारश्चेत्—अधिष्ठानापारमार्थ्येऽप्यनवस्था परिहृता स्यात् । तत्रापरमार्थत्वप्रयुक्तोपपत्तिरवर्जनीयेत्यधिष्ठानापेक्षा स्यादेवेत्यनवस्थितिः—इति वक्तव्यं, तदत्र दोषेऽपि तुल्यमित्यनवस्था दुष्परिहरा । प्रवाहानादित्वपक्षेऽपि, अधिष्ठानापारमार्थ्येऽपि—अनवस्था सुपरिहरा; पितृपुत्रादिपरम्परावदधिष्ठानपरम्परानादित्वाभ्युपगमात् । जीवाज्ञानवादिनं प्रति ब्रह्माज्ञानवादिना यद्दुर्घटत्वे दूषणमुक्तं तद् ब्रह्माज्ञानेऽपि तुल्यं, यथा—अविद्याया दुर्घटत्वं चेत्—मुक्तान्, परब्रह्म चाश्रयेदविद्या । शुद्धस्वरूपं ब्रह्म अशुद्धस्वरूपाविद्या विरोधात्—नाश्रयतीति चेत्—तर्ह्युपपत्तिमत्यविद्या, तस्मादुक्तान्योन्याश्रयणादिदूषणान्यापतेयुरिति ह्युक्तं, तत्तवापि तुल्यं मोक्षेऽपि ब्रह्माश्रयेदविद्या । न हि बाधकज्ञाने सत्यपरमार्थभूताऽविद्या तिष्ठतीति—चेत्, बाधकसन्निधौ न बाध्यस्थितिरित्येवंरूपोपपत्तिमत्येवाविद्या—इत्यस्मदुक्तान्यनवस्थादिदूषणान्यापतेयुरिति वक्तुं शक्यते । दोषस्य स्वपरनिर्वाहकत्वे—अधिष्ठानमपि तथा स्यात् । परं प्रत्यधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वमिति चेत्, परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वं—तदेव नास्तीति तुल्यं स्यात् । अधिष्ठानारोप्ययोर्भेदो दृष्टः, तत्राधिष्ठानस्य स्वपरनिर्वाहकत्वे—अधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग इति चेत्, दोषतत्कार्ययोरपि तिमिरचन्द्रद्वित्वयोर्भेदो दृष्टः, दोषस्य स्वपरनिर्वाहकत्वे दोषाध्यस्तयोरैक्यप्रसङ्ग इति तुल्यम्—इत्येतदभिप्रायेण **यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावद्भ्रान्तिरुपपादिता**

---

[1] °दूषणत्वे वक्ष्य° का. मु. पु. ।

स्यात्। अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमो न तावद्भ्रान्तिरुपपादिता भवति। अनिर्वचनीयत्वं च किमभिप्रेतं, सदसद्विलक्षणत्वमिति चेत्—तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात्। एतदुक्तं भवति—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यं, सर्वा च प्रतीतिः सदसदाकारा, सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने—सर्वं सर्वप्रतीतेर्विषयः स्यादिति। अथ स्यात्—वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्या; ज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किंचिद्वस्तु प्रत्यक्षानुमानाभ्यां

---

**भवतीत्युक्तम्।** यथोक्तमाचार्यपादैः—'स्वरूपानादित्वं स्वपरघटने दुर्घटनता प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः। असत्याविद्याया गदितुमनवस्था परिहृता मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणा'विति। **इति स्वरूपानुपपत्तिः॥**

अथानिर्वचनीयत्वानुपपत्तिमाह—**अनिर्वचनीयत्वं चेति। अनिर्वचनीयता** विद्वत्सन्निधौ दुरुपपादत्वम्। कथं प्रमाणशून्यत्वमित्यत्राह—**एतदुक्तमिति। सर्वं सर्वप्रतीतेर्विषयः स्यादितीति।** सदसद्विलक्षणमिति या प्रतीतिस्तत्रापि सदसदेव विषयः स्यादित्यर्थः। प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते, तस्मात्सदसदाकारायाः प्रतीतेः सदसदाकार एव विषयः, न सदसद्विलक्षणम्। यथा ख्यातिविवेके—'न ह्यन्यदवभास्यमन्यो विषयः, अवभासनव्यवस्थाप्यत्वं विषयस्ये'ति। एकस्य विषयस्य सदसदाकारत्वमनुपपन्नं; व्याप्तिविरोधादिति चेत्, सदसद्विलक्षणत्वं च व्याप्तिविरोधादनुपपन्नं; सतोऽसद्विलक्षणत्वमसतः सद्विलक्षणत्वं च हि दृष्टं, न त्वेकस्योभयवैलक्षण्यं दृष्टमिति व्याप्तिविरोधः। अयं च विशेषः—सदसद्विलक्षणत्वं क्वचिदपि न दृष्टं, सदसदात्मकत्वं दृष्टमिति। यथा संवित्सिद्धौ—**'नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत्। प्रतीतेरेव सत्किं न बाधान्नासत्कुतो जग'**दिति। अर्थस्थितौ सत्त्वमसत्त्वं वा स्यात्, न तद्विलक्षणत्वम्। सतो घटादेः सदसद्विलक्षणत्वं दृष्टमिति—चेन्न; तथा सति—ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्गात्। अन्यतरत्वसहं सदसद्विलक्षणत्वमिष्टमेवेति चेत्, तुल्यम्, ईदृशं सदसद्वैलक्षण्यं वदता शब्दान्तरेण सत्त्वमेवाङ्गीकृतं भवति, अतस्त्वदभिमतं सदसद्विलक्षणत्वं विरोधादपास्तम्। अस्तीति प्रतिपन्नत्वं सत्त्वं, नास्तीति धीविषयत्वं बाधितत्वम्—इत्येकस्यैव सत्त्वासत्त्वविरोधः सदसद्विलक्षणत्वकल्पकश्चेत्, सर्वत्र पूर्वपक्ष–सिद्धान्तप्रतीत्योः परस्परविरुद्धाकारविषयत्वात्—उभयाकारविलक्षण एवार्थः साध्य इति–सिद्धान्तसमर्थनवैयर्थ्यं स्यात्, ततश्च भेदः सुनिरूप इति पूर्वपक्षीकृत्य दुर्निरूप इति त्वया सिद्धान्तिते—प्रतीतिद्वयविरोधात्सुनिरूपदुर्निरूपविलक्षणः स्यात्। एवं संवित्सत्यत्वमिथ्यात्व–जडत्वाजडत्व–नित्यत्वानित्यत्वादिवादेषु पूर्वपक्षसिद्धान्तिताकारविलक्षणत्वं संविदः स्यात्, तच्चानभिमतम्, अतः परस्परविरुद्धाकारप्रतीत्योः प्रतिपन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति–न सदसद्वैलक्षण्यसिद्धिः। तर्हि ख्यातिबाधान्यथानुपपत्तेः कः परिहार उक्त–इति चेत्, अन्यथैवोपपत्तिरुक्ता भवति; सत्त्वे सत्यन्यथख्यानादिभिस्तत्तद्वाद्यभिमतैरेव ख्यातिबाधोपपत्तेः। सतः कथं बाधः; अन्यत्र ख्यातत्वात्। ननु—अन्यत्र सच्चेन्न बाधः, न सच्चेदसत्ख्यातिप्रसङ्ग इति—चेन्न; अन्यत्र सत्त्वात्, अन्यत्र सतोऽन्यत्र ख्यातत्वं ह्यन्यथाख्यातत्वम्। अन्यत्र सतोऽन्यत्र ख्यातिर्दोषवशात्, दोषस्यान्यत्र ख्यातिहेतुत्वं न दृष्टम्–इति चेत्, दोषस्यानिर्वचनीयावभासहेतुत्वं च न क्वचिद्विमतिपदादन्यत्र दृष्टमिति—तुल्यं, मिथो विरुद्धाप्रतिपन्नाकारद्वयवैलक्षण्यमेकस्य विरुद्धमित्येतत्तबाधिकम्। अख्यातिपक्षे सत्त्वे सति भेदाग्रहेण–ख्यातिबाधोपपत्तिः; सत एवागृहीतभेदतया ख्यातिः, भेदग्रहश्च बाधः, बाध्यत्वं च प्रवृत्तेः। यथार्थख्यातिपक्षे तु शुक्तिरजत–स्वाप्नार्थादौ सत्त्वात्, प्राचुर्याभावास्थिरत्वतदेकानुभाव्यत्वाग्रहाच्च—ख्यातिबाधोपपत्तिः, पुरोवर्तिनि सत एव रजतस्य ख्यातिः, शुक्तिप्राचुर्यग्रहो बाधः, तेन प्रवृत्तिर्बाध्या, तद्बाधश्च प्रवृत्त्यनुपपत्तिः, अलातचक्रादौ त्वख्यातिपक्ष इव तदुपपत्तिः, अतोऽन्यथैवोपपत्तिः सिद्धा–इत्यनिर्वचनीयत्वकल्पनमयुक्तम्। **इत्यविद्याग्रन्थेऽनिर्वचनीयत्वानुपपत्तिः॥**

एवमाश्रयतिरोधान–स्वरूपानिर्वचनीयत्वानुपपत्तय उक्ताः, अथ 'न हि दृष्टेऽनुपपन्नं नामे'ति न्यायात्प्रमाणसिद्धार्थस्य तर्केण बाधो न युक्त–इत्यभिप्रायवता परेण प्रमाणप्रतिज्ञा शङ्क्यते—**अथ स्यादिति।** पूर्वदूषिताकारान् साधयितुमाह—**वस्तुस्वरूपेति।** अनेन तिरोधानमुक्तम्। **आन्तरबाह्येति** स्वरूपमुक्तं; अध्यासोपादानत्वेन हि मिथ्यात्वं फलितम्। **सदसदि**त्यनिर्वचनीयत्वमुक्तम्। शास्त्रेष्वेतत्प्रतिपादकशब्दप्रत्यभिज्ञानार्थम**विद्याऽज्ञानादिपदवाच्यत्व**मित्युक्तम्। सिद्धान्तिना दूषयिष्यमाणमाकारान्तरमपि साध्यत्वेनाह—**वस्तुयाथात्म्यज्ञानेति**[3]**। तदुपहिते**त्याश्रयश्च। आन्तराध्यासः कः, बाह्यः कः, कथं चाविद्योपादानत्वे ब्रह्मण उपादानत्वम्–इत्यत्राह—**तदुपहितेत्यादिना।** निष्कृष्टब्रह्मण उपादानत्वा-

---

१ इति नैकस्य सत्त्वासत्त्वा° का. मु. पु.। २ °त्वागृहत्वाच्च का. मु. पु.। ३ एतत्पूर्वं का. मु. पु. ४६८ पृ. ननु चेत्यारभ्य ४७१ पृ. °निर्वाहार्थमाहेत्यन्तं ४७४ पृ. टीकायामष्टमपङ्क्त्युत्तरं क्रमप्राप्ततया दृश्यमानमेव ग्रन्थजातं ग्रथितं दृश्यते, एतावद्ग्रन्थजातं कथंवा पिष्टपेषणदोषग्रस्तमभूदिति विस्मयेमहि।

करण्यस्य **'ज्योतींषि विष्णुर्भुवनानि विष्णुः'** ( वि. पु. २।१२।३८ ) इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह । अस्मिञ्छास्त्रे पूर्वमप्येतदसकृदुक्तम् । **'तानि सर्वाणि तद्वपुः'** ( वि. पु. १।२२।८४ ) । **'तत्सर्वं वै हरेस्तनुः ।'** ( वि. पु. १।२२।३७ ) **'स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः'** ( वि. पु. १।२।६८ ) इति । तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते **'ज्योतींषि विष्णुः'** ( वि. पु. २।१२।३८ ) इति । अत्रास्त्यात्मकं, नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम् । इदमस्त्यात्मकमिदं नास्त्यात्मकमस्य च नास्त्यात्मकत्वे हेतुरयमित्याह—**'ज्ञानस्वरूपो भगवान्यतोऽसौ'** ( वि. पु. १।१२।३९ ) इति । अशेषक्षेत्रज्ञात्मनावस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम्, न देवमनुष्यादिवस्तुरूपम् । यत एवं तत एवाचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः—तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसंधानमूलाः, देवाद्याकारानुसंधानमूलकर्ममूला इत्यर्थः । यतश्चाचिद्वस्तु

---

**स्येति** । अनधीतशाखास्वपि तादात्म्योपदेशोऽस्ति तस्यायमेवार्थ इति ज्ञापनं **तादात्म्योपदेशस्योपबृंहणम्** । यद्वा, प्रत्यक्षसकलश्रुतिगततादात्म्योपदेशोपबृंहणं नाम—अनधीतशाखासु तद्विरुद्धार्थप्रतिपादनं नास्तीति ज्ञापनम् । अत्र **इति**-शब्दत्रयस्यानेन श्लोकेन भगवानिममर्थमभिप्रेत्यायमर्थं इत्याहेत्यन्वयप्रकारः । न केवलमत्र समष्टिसृष्टिश्लोकगतव्यधिकरणनिर्देशेन व्यष्टिश्लोकगतसामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति विज्ञायते, अपि तु प्रदेशान्तरेषु व्यष्ट्यवस्थानां भगवन्तं प्रतिशरीरत्वं, सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं चासकृत्कण्ठोक्तमित्याह—**अस्मिन्निति** । शरीरात्मभावस्य-सामानाधिकरण्यहेतुत्वं कण्ठोक्तं—**विश्वरूपो यतोऽव्यय इति** । तथान्यत्रापि—**सर्वगत्वादनन्तस्य, स एवाहं, सर्वं समाप्नोषि ततोऽसि सर्वः** इत्यादि द्रष्टव्यम् । **तदिद**मित्यादिना **ज्योतींषी**त्यादिश्लोके पादत्रयस्यार्थ उच्यते । संसृष्टस्य भगवदात्मकत्वमुक्तमित्यर्थः । 'प्रधानादिविशेषान्तं चेतनाचेतनात्मक'मित्युक्तत्वात्—**ज्योति**रित्यादिशब्दाः संसृष्टजीववाचिनः । अथोत्तरश्लोकसङ्गत्यर्थं विशिष्टवाक्यार्थानुवादेन चतुर्थपादार्थं दर्शयति—**अत्रास्त्यात्मकमिति** । **यदम्बि**त्यादिश्लोकेन वैयधिकरण्येन समष्ट्यवस्थचिदचितोर्भगवदात्मकत्वमुक्तम् । व्यष्ट्यवस्थयोरसंसृष्टयोः संसृष्टयोरपि तयोः सामानाधिकरण्येन भगवदात्मकत्वमुच्यते **ज्योतींषी**त्यादिना श्लोकेन । तत्र पादत्रयेण व्यष्ट्यवस्थयोः संसृष्टयोः तदात्मकत्वमुक्तं, चतुर्थपादेन तु निष्कृष्टयोरपि तदात्मकत्वमुक्तमित्यर्थः । अनन्तरश्लोकमवतारयति—**इदमिति** । अचिदंशस्य नास्त्यात्मकत्वनिबन्धनमेव तात्पर्यविषयः । अचिदंशस्य हि मिथ्यात्वशङ्का व्युदसनीया, अतस्तस्य परिणामित्वात्—नास्त्यात्मकत्व एव तात्पर्यं, चिदंशस्य त्वपरिणामित्वादस्त्यात्मकत्वं फलितं स्यादित्यभिप्रायेण **अस्य च नास्त्यात्मकत्वे हेतुरयमित्याहे**त्युक्तम् । व्याख्येये प्रतीकमुपादत्ते—**ज्ञानस्वरूप इति** । अत्र **ज्ञानस्वरूपो भगवा**निति सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं न केवलं पूर्वश्लोके **यदम्बु वैष्णवः काय** इत्युक्तत्वादवगम्यते, अस्मिन्नपि श्लोके **अशेषमूर्तिं**रित्यनेनापि ज्ञायत इत्यभिप्रायेण व्याचष्टे—**अशेषेति** । **अशेष**शब्देनाचितोऽपि विवक्षितत्वे—भगवन्तं प्रति तस्य मूर्तित्वं विहितं स्यात्; अप्राप्तत्वात्, ततश्च **न तु वस्तुभूत** इति देवमनुष्यशैलाब्धिधरादिवस्तुभावनिषेधोऽनुपपन्नः, अतोऽ**शेष**शब्दः क्षेत्रज्ञविषय इत्यभिप्रायेण—**अशेषक्षेत्रज्ञात्मने**त्युक्तम् । अत्र **ज्ञानस्वरूपादि**शब्दानां परमविशेष्यपर्यन्ताभिधायित्वेऽपि विशेषणविशेषणे वाक्यस्य तात्पर्यम्, अतो ज्ञानस्वरूपत्वं विशेषणभूतजीवस्यैव विधीयते—यथा 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यत्र विशेषणगतं लौहित्यमेव विधेयं, परम्परया ऋत्विक्प्रचारकर्मविशेषणं—तद्वत् । 'काठिन्यवान् यो बिभर्ति, नृसिंहमूर्तिर्भगवान् श्वेत' इत्याद्युदाहरणं द्रष्टव्यम् । **ज्ञानस्वरूप** इत्यत्र दिव्यात्मस्वरूपस्य ज्ञानस्वरूपत्वमुच्यत इति शङ्कनीयं; **सर्वकर्मक्षये ज्ञानमपास्तदोष**मिति विवरणानुपपत्तेः । नहि दिव्यात्मस्वरूपस्य कर्मतत्कृतरागद्वेषादिहेयसंबन्धप्रसङ्गः । न तु वस्तुभूत इत्यस्यार्थमाह—**न देवमनुष्यादीति** । शैलादिस्थावरोक्तिः सर्वशरीराणामुपलक्षणमिति ज्ञापनार्थो **देवमनुष्यादि**शब्दः । उत्तरार्धं व्याचष्टे—**यत एवमिति** । **शैलाब्धिधरादिभेदान् विज्ञानविजृम्भितानि जानीही**त्यनेन फलितं हेतुहेतुमद्भावं विवृणोति—**तद्विज्ञानेत्यादिना** । **विज्ञान**शब्दं व्याचष्टे—**तस्येति** । **विज्ञानं** विविधज्ञानम् । कथं शैलाब्धिधरादिभेदस्य वैविध्यानुसंधानमूलत्वं; निजकर्मभेदविभिन्नचित्तैः सर्वकर्मक्षये इति कर्ममूलत्वेन वक्ष्यमाणत्वात्—कर्मैव हि मूलमित्यत्राह—**देवादीति** । वैविध्यानुसंधानस्य देवादिभेदहेतुत्वं सद्वारकम्; उपरितनग्रन्थैकार्थ्यात्, 'अविद्यासंचितं कर्म, बाह्यकर्मवृतिप्रजः, भूपैते कर्मयोनयः' इत्यादिवचनान्तराच्चेत्यर्थः । **पूर्वमिदमस्त्यात्मकमित्यादिनोक्तश्लोकवाक्यार्थः** कथं घटत इत्यत्राह—**यतश्चेति** । **ज्ञानस्वरूपः, विज्ञानविजृम्भितानी**त्यनेन फलि-

क्षेत्रज्ञकर्मानुगुणं परिणामास्पदं ततस्तन्नास्तिशब्दाभिधेयम्, इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति । तदेव विवृणोति—**'यदा तु शुद्धं निजरूपि'** ( वि. पु. २।१२।४० ) इति । यदैतज्ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसंधानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैकीकृत्यात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्था वस्तुषु वस्तुभेदा न भवन्ति । ये देवादिषु वस्तुष्वात्मतयाभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादिवस्तुभेदास्ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीति—अचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम्, इतरस्य सर्वदा निजसिद्धज्ञानैकाकारत्वेनास्तिशब्दाभिधेयत्वमित्यर्थः । प्रतिक्षणमन्यथाभूततया—कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह—**वस्त्वस्ति किम्'** (वि. पु. २।१२।४१) इति । अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनः सततैकरूपः पदार्थः; तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् । अचिद्वस्तु किंचित्कचिदपि तथाभूतं न दृष्टचरम् । ततः किमित्यत्राह—**'यच्चान्यथात्वम्'** ( वि. पु. २।१२।४१) इति । यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति—तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसंधानमस्ति । अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव ।

---

तमित्यर्थः । **तदेवेति ।** पूर्वपक्षयोजनायामुक्तेष्वर्थेष्वपेक्षितांशोपजीवनेन सिद्धान्तयोजना क्रियते, विज्ञानविजृम्भितत्वमेव व्यतिरेकमुखेन विवृणोतीत्यर्थः । पूर्वश्लोके देवादिभेदानां स्वात्मवैविध्यानुसंधानमूलत्वं सद्वारकमिति व्याख्यानम्, अनन्तरश्लोके व्यतिरेकमुखेन विवरणे कर्महेतुत्वं श्रवणनिबन्धनमिति स्पष्टयन्नाह—**देवाद्याकारेणेति । निर्दोष**मित्यादिपदानामर्थविभागो **ज्ञानं विशुद्ध**मित्यादिश्लोकव्याख्याने विशदयिष्यत इति–ग्रन्थलाघवार्थमत्र न विस्तृतः । **निर्दोषं** शरीरसंबन्धरहितम् । **परिशुद्धं** तत्कृतरागद्वेषसुखदुःखादिरहितम् । **निजरूपि** आविर्भूतस्वरूपम् । **सङ्कल्प**शब्दं व्याचष्टे—**एकीकृत्यात्मकल्पन**शब्देन । समित्येकीकार इति हि शाब्दाः । पूर्ववत्सद्वारकमिति व्याचष्टे—**आत्मकल्पनामूलकर्मफलभूता इति ।** देहात्मनोरेकीकृत्यानुसन्धानफलं देवाद्याकारेण स्वात्मवैविध्यानुसन्धानं, तयोरैकैकं **विज्ञान**शब्दे, **सङ्कल्प**शब्देप्यर्थसिद्धम् । सुखदुःखे हि कर्मफले तत्कथं वस्तुभेदस्य कर्मफलत्वमिति शङ्कायां—**तद्भोगार्था** इत्युक्तम् । सुखादिभोगद्वारभूतत्वात्–देवादिभेदाः कर्मफलमित्यर्थः । 'भोक्ता भोग्यं प्रेरितारं च मत्वे'त्यादिषु **भोग्य**शब्दार्थः स्पष्टीकृतो भवति । **तद्भोगार्था** इत्यनेन भोगस्थान-भोगोपकरणानां भोगसिद्धिप्रयोजकत्वमेव भोग्यत्वमित्यर्थः । सप्तम्यन्त**वस्तु**शब्दो जीवपर्यन्तदेहपरः । द्वितीय**वस्तु**शब्दो देवादिशरीरमात्रपरः । **वस्तुभेदाः** देवादिशरीरभेदाः । अत्र **वस्तुभेद**शब्देन भेदस्य वस्तुरूपत्वात्–पारमार्थ्यमपि फलितम् । अत्रान्वितेषु पदेषु व्याख्येयपदव्याख्यानार्थमाह—**ये देवादिष्विति । देवादिषु वस्तुष्वात्मतयाऽभिमतेषु** प्रथम**वस्तु**शब्दो जीवपर्यन्तदेहपर एवेत्यभिप्रायः । संसृष्टाकारो ह्यात्माभिमानः । **तद्भोगार्था** इति पूर्वोक्तस्य पदस्य व्याख्येयपदमुदाहरति—**भोग्यभूता इति । भोग्यभूता** इत्यनेन **वस्तुभेदा** इति पदस्याचिदंशमात्रपरत्वमुक्तम् । **न तु वस्तुभूत** इत्युक्तत्वात्–पूर्वश्लोकोक्तभेदा एवात्र विवक्षिता इत्याह—**देवमनुष्येति ।** कारणाभावात्कार्याभावो हि व्यतिरेकः, तं स्पष्टयति—**मूलभूतेति ।** परमप्रकृतार्थस्यापि फलितत्वमाह—**इत्यचिद्वस्तुन इति ।** पूर्वश्लोकफलितार्थकथने आत्मनोऽस्तिशब्दवाच्यत्वे हेतुरनुक्तः, अत्र तु तस्यापि फलितत्वमाह—**इतरस्येति ।** जगदुपलब्धिप्रकारेणापि वस्तुभेदानां परिणामित्वमुपपाद्यते श्लोकद्वयेन, तत्र प्रथमस्य वाक्यार्थमाह—**प्रतिक्षणमिति ।** श्लोकस्य **नास्ति**शब्दाभिदेयतापरत्वं **यदस्ति यन्नास्ती**त्युपक्रमादवगतम्, अस्मिन्नपि श्लोके प्रयोजकशिक्षा । **वस्त्वस्ति किमि**त्यर्थयोजनौपयिकतयात्राभिधेयं **यदस्ति यन्नास्ती**त्युपक्रमवशात्सिद्धमर्थमाह—**अस्तिशब्देति ।** सततैकरूपतया **अस्ति**शब्दवाच्यत्वे सति हि पूर्वार्धोक्तस्य तदभावस्य **नास्ति**शब्दाभिधेयताहेतुत्वसिद्धिः । पूर्वार्धं व्याचष्टे—**अचिद्वस्त्विति ।** किमनेन **नास्ति**शब्दाभिधेयत्वस्येति शङ्कायाम्, उत्तरार्धमवतारयति—**ततः किमित्यत्राहेति । याती**ति वर्तमाननिर्देशस्याभिप्रायमाह—**प्रतिक्षणमिति । भूयो न तत्तथे**त्यस्यार्थमाह—**तदिति । उत्तरोत्तरावस्थाप्राप्त्ये**ति **भूयः**शब्दार्थः । **न तत्तथे**त्यस्यार्थमाह—**पूर्वपूर्वावस्थां जहातीति ।** **तत्रे**त्यस्यार्थमाह—**पूर्वावस्थस्योत्तरावस्थायामिति । कुतस्तत्त्व**मित्यस्यार्थमाह—**न प्रतिसंधानमिति । तत्त्वं** तस्य भावः । तदिदमिति प्रतिसंन्धानानर्हत्वं फलितमित्यर्थः । ननु—**तत्त्वं कुतः** पूर्वावस्थत्वं कुत इत्युक्तं, कथं प्रतिसन्धाननिषेधः, उच्यते—**कुतः**शब्दः प्रमाणप्रतिक्षेपपरः, पर्वतोऽग्निमानित्युक्ते कुत इति प्रमाणाकाङ्क्षा हि द्योत्यते, अतः प्रतिक्षेपपरः **कुतः**शब्दोऽपि प्रमाणप्रतिक्षेपपरः–कुतः प्रमाणादित्यर्थः । पूर्वावस्थस्य भूयस्तथात्वे प्रमाणं च प्रत्यभिज्ञा, अतः प्रमाणे प्रतिक्षिप्ते प्रतिसन्धानं निषिद्धं भवतीति भावः; अन्यथा **न तत्तथे**त्यनेन पौनरुक्त्यं स्यात् । **हि**शब्देन फलितमर्थमाह—**अत इति । नास्ति-**

तथा ह्युपलभ्यत इत्याह **'मही घटत्वम्'** ( वि. पु. २।१२।४२ ) इति। स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते, अनुभूयत इत्यर्थः। एवं सति किमप्यचिद्वस्त्वस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैकरूपमालक्षितमस्ति किं, न ह्यस्तीत्यभिप्रायः। यस्मादेवं तस्माज्ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित्कचित्केवलास्तिशब्दवाच्यं न भवतीत्याह— **'तस्मान्न विज्ञानमृते'** ( वि. पु. २।१२।४३ ) इति। आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेत तेन रूपेण बहुधानुसंहित इति—तद्बहुधानुसंधानं नात्मस्वरूपप्रयुक्तमित्याह—**विज्ञानमेकम्'** ( वि. पु. २।१२।४३ ) इति। आत्मस्वरूपं तु कर्मरहितं, तत एव मलरूपप्रकृतिस्पर्शरहितं, ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगु-

---

शब्दवाच्यत्वे प्रयोजकशिक्षा कृता। शिक्षितमर्थमुदाहरणेन दर्शयत्यनन्तरश्लोक इत्यभिप्रायेणाह—**तथा हीति**। **महीघटत्व**मिति श्लोकं व्याचष्टे—**स्वकर्मणेत्यादिना**। **महीघटत्व**मित्यत्र **याती**ति पूर्वश्लोकादनुषङ्गः। कर्मण आत्मनिश्चयविरोधित्वं सद्वारकमित्याह—**देवमनुष्यादिभावेनेति**। देवादिदेहसंसर्गेणेत्यर्थः। **स्तिमितं** प्रतिबद्धम्। अस्थिरे भोग्यत्वबुद्धिः, स्थिरतरसुखरूपात्मनिश्चयस्तैमित्यादिति भावः। यद्वा आत्मज्ञानरहितैरप्यचिद्वस्तुनोऽस्थिरत्वमालक्ष्यत इत्याह—**तथा हीति**। **आलक्ष्यत इति**। चाक्षुषज्ञाने प्रयोगप्राचुर्यात्तद्व्यावृत्त्यर्थ**मनुभूयत** इत्युक्तम्। श्लोकव्याख्यानपरिसमाप्तिं द्योतयति—**इत्यर्थ इति**। ब्रूहीत्यादेरर्थमाह—**एवं सतीति**। अनेनात्रेति पदं व्याख्यातम्। **अचिद्वस्त्वि**ति पदेन श्लोकस्थ**वस्तु**शब्दो व्याख्यातः। **अस्तिशब्दार्ह**मित्यादिविशेषणं सामर्थ्यसिद्धतयोक्तम्। अथवा, श्लोकद्वयाभिप्रायमाह—**एवं सतीति**। **न तु वस्तुभूत** इति। पुराणग्रन्थे **किमप्यचिद्वस्तु, अचिद्वस्तु किंचि**दिति भाष्ये च अचिद्विषय**वस्तु**शब्दप्रयोगात्त**द्वस्तु नृप तच्च कि**मिति ग्रन्थस्थ**वस्तु**शब्दतुल्यत्वं न शङ्कनीयम्। **अस्ति कि**मित्यनेन श्लोकस्थस्या**स्ति**शब्दस्य भवत्यर्थत्वमुक्तम्, अत एव **यदस्ती**त्यस्तिशब्दवन्नात्मस्वरूपपरत्वं शङ्कनीयम्। फलितमाह—**न हीति**। **अस्ति किं न ह्यस्ती**ति भाष्यस्वारस्येन श्लोकद्वयोपक्रमगतस्यास्ति **कि**मिति वाक्यस्य प्रत्यभिज्ञातस्य भवत्यर्थतया व्याख्यातत्वं प्रतीयते। यद्वा, **अस्ति**शब्दाभिधेय इत्यनेन **वस्त्वस्ति कि**मित्यत्रा**स्ति**शब्दो व्याख्यातः; **यदस्ति तस्मान्न विज्ञानमृतेऽस्ती**त्यनेनैकरूप्यात्। एवं **वस्त्वस्ति किं, महीघटत्व**मिति श्लोकद्वयस्य प्रत्येकमुक्तो वाक्यार्थः पूर्वपक्षयोजनायामुपजीव्यः। उत्तरश्लोकस्य प्रथमार्धं व्याचष्टे—**यस्मादिति**। **यस्मादेवं तस्मादिति**। परिणामित्वादेव, न तु ज्ञानबाध्यत्वादित्यर्थः। **अचिद्वस्तु**शब्देन **वस्तुजात**शब्दार्थ उक्तः। **जात**शब्दशिरस्को वस्तुशब्दो न नित्यवाचीति भावः। **केवलास्तिशब्दवाच्यमिति**। एतच्छ्लोकस्था**स्ति**शब्दो न भवत्यर्थः; ज्ञानव्यतिरिक्तस्य **तदेतदक्षयं नित्यम्** इत्यादिना नित्यत्वेनोक्तस्य निषेध्यत्वायोगात्, **यदस्ती**त्युपक्रान्तस्योपसंहारौचित्याच्चेति भावः। प्रागभावप्रध्वंसाभाववतोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वम्, अवच्छिन्नास्तिशब्दवाच्यत्वं चेति तद्व्यावृत्त्यर्थं **केवल**शब्दः। एवमात्मव्यतिरिक्तवस्तुनो **नास्ति**शब्दाभिधेयत्वमुपसंहृतम्। **विज्ञान**मित्यादि व्याचष्टे—**आत्मात्विति**। **तु**शब्दोऽचिद्वैषम्यपरः। **सर्वत्र** सर्वशरीरेषु। **एक**शब्दं व्याचष्टे—**ज्ञानैकाकारतयेति**। 'एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते प्रजा' इतिवदय**मेक**शब्द आकारैक्यपरः। स चाकारो **विज्ञान**शब्दोक्तं ज्ञानत्वमित्यभिप्रायेणोक्तम्। **ज्ञानैकाकारतये**ति भावप्रधानो निर्देशः—ज्ञानत्वैकाकारतयेत्यर्थः; स्वरूपतो धर्मतश्चाविशेषेण ज्ञानत्वं सद्वारकमद्वारकं चाकारोहि भवति। **ज्ञानैकाकाकारतये**त्यत्र **एक**शब्देन संकोचविकासदुःखरूपत्वादिव्युदासश्च। **देवादिभेदप्रत्यनीकस्वरूपोऽपीति**। एकरूपत्वाद्भेदप्रत्यनीकत्वम्। निजकर्मादिपदं व्याचष्टे—**देवादीति**। **भेद**शब्दार्थमाह—**विविधेति**। **बुद्धि**शब्देन चित्तशब्दार्थ उक्तः। बुद्धेर्भेदश्चात्मन्यारोप्यमाणदेवाद्याकाररूपविषयभेदात्—**बहुधा** देवत्वादि बहुप्रकारविशिष्टतयाऽभ्युपेतमित्यर्थः। **बहुधा**शब्देन एकशब्दस्याकारैक्यपरत्वं स्पष्टम्। फलितमर्थमाह—**नात्मस्वरूपप्रयुक्तमिति**। औपाधिकमित्यर्थः। उपाधिविमोक्षे कीदृशं स्वरूपमित्यपेक्षायामनन्तरश्लोकं व्याचष्टे—**आत्मेति**। **विशुद्ध**पदं व्याचष्टे **कर्मरहितमिति**। **विमल**पदं व्याचष्टे—**तत एवेति**। **विमल**पदव्याख्यानमिति स्पष्टीकर्तुं **मलरूप**शब्दः। **मलरूपप्रकृतिस्पर्शरहित**मित्यनेन **सर्वकर्मक्षये ज्ञानमपास्तदोष**मित्यस्यार्थोऽवगतः; कर्मक्षयवाचिपदानन्तरपदस्य शरीरसंबन्धरहितपरत्वेन व्याख्यातत्वात्। तथा च श्रुतिः—'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामी'ति। अत्र हि **पापं विधूये**त्युक्त्वा **धूत्वा** शरीरमित्युक्तत्। उपरितनपदानि व्याचष्टे—**ततश्चेति**। **ततश्च** तत एवेत्यर्थः हेतोर्नैरपेक्ष्यसूचकश्चशब्दः। निरस्ताशेष-

णासङ्गि, उपचयापचयानर्हतयैकं तत एव सदैकरूपं, तच्च वासुदेवशरीरमिति तदात्मकम्; अतदात्मकस्य कस्यचिदप्यभावादित्याह—'**ज्ञानं विशुद्धम्**' (वि. पु. २।१२।४४) इति । चिदंशः सदैकरूपतया सर्वदास्तिशब्दवाच्यः । अचिदंशस्तु प्रतिक्षणपरिणामित्वेन सर्वदा नाशगर्भ इति—सर्वदा नास्तिशब्दाभिधेयः । एवंरूपं चिदचिदात्मकं जगद्वासुदेवशरीरं तदात्मकमिति—जगद्याथात्म्यं सम्यगुक्तमित्याह—'**सद्भाव एवम्**' ( वि. पु. २।१२।४५ ) इति । अत्र सत्यमसत्यमिति यदस्ति यन्नास्तीति प्रक्रान्तस्योपसंहारः । **एतत्** ज्ञानैकाकारतया सममशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं **भुवनाश्रितं** देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्तते तत्र हेतुः कर्मैवेत्युक्तमित्याह—'**एतत्तु यत्**' (वि. पु. २।१२।४५) इति । तदेव विवृणोति—'**यज्ञः पशुः**' (वि. पु. २।१२।४६) इति । जगद्याथार्थ्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह—'**यच्चैतत्**' ( वि. पु. २।१२।४७ ) इति । अत्र निर्विशेषे परे ब्रह्मणि, तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे वानुगुणं किंचिदपि पदं न दृश्यते । अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम्; ज्ञानैकाकारस्यात्मनो देवादिविविधाकारानुभवे, अचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात् । अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च—

---

लोभादिसङ्गमित्यर्थः । **एक**मिति पदं व्याचष्टे—**उपचयापचयानर्हतयैकमिति** । **उपचयापचयौ** वृद्धिक्षयौ, तदर्हत्वं सावयवत्वं, सावयवत्वाभावादेवैकशब्दवाच्यत्वं, निरवयवत्वमेकत्वमित्यर्थः । तत एव **सदैकरूप**मिति निरवयवत्वात्—सावयवत्वप्रयुक्तवृद्धिक्षयरहितमित्यर्थः । सामानाधिकरण्यं व्याचष्टे—**तच्चेति** । **यदम्बु वैष्णवः कायः, अशेषमूर्ति**रित्युक्तत्वात्—अयमेवार्थः । **न यतोऽन्यदस्ती**त्येतद्व्याचष्टे— **अतदिति** । **यतः** यस्माद्वासुदेवादन्यत्स्वपर्यवसितं वस्तु नास्तीत्यर्थः । यद्वा, **वासुदेवा**दिति पदमध्याहृत्य योजना, वासुदेवादन्यत्रास्तीति यतः तत इत्यर्थः । अस्यां योजनायां **तच्छब्दः** प्रसिद्धपरामर्शी, अतोऽपि पूर्वयोजना साधीयसी; तद्वृत्तस्य यद्वृत्तप्रतिनिर्देशरूपत्वस्वारस्यात्, पञ्चम्यन्ताध्याहारानपेक्षत्वाच्च । **ज्ञानस्वरूपः, यदा** त्विति श्लोकौ चिदचित्साधारणौ, **वस्त्वस्ती**त्यादिसार्धश्लोकद्वयमचिदसाधारणं, **विज्ञान**मित्यादिसार्धश्लोकश्चिदसाधारण इति विभागः । न परमतमुक्तं तत्त्वमेवोक्तमित्यभिप्रायेण **सद्भाव** इत्याद्यर्धमुक्तम् । तत्र **यथा**शब्दार्थमाह—**चिदंश इति** । **यथा** येन प्रकारेण—परिणामित्वापरिणामित्वरूपेण, न ज्ञानबाध्यत्वाबाध्यत्वरूपेणेत्यर्थः । **एवंरूपेति** । शरीरशरीरिभावरूपेण येन प्रकारेण भगवदात्मकत्वं, न तु स्वरूपैक्येनेत्यर्थः । श्लोके यथाशब्दप्रतियोग्य**एवं**शब्दः । सत्यं ज्ञानम्, असत्यमन्यच्च यथावस्थितम् । **एवं सद्भाव उक्त** इत्यन्वयोऽभिप्रेतः । अतः सत्यासत्यशब्दवाच्यत्वनिर्वाहकापरिणामित्वपरिणामित्वे, भगवदात्मकत्वं च **यथा**शब्दविवक्षितं भवति । अन्यदुपक्रान्तमन्यदुपसंहृतं भवति; **अस्तिनास्ति**शब्देन उपक्रम्य **सत्यासत्य**शब्देन उपसंहारादित्यत्राह—**अत्रेति** । उपक्रमोपसंहारयोः शब्दान्तरनिर्देशस्यायं भावः—अन्येष्वपि शब्देषु क्वचिदेवं श्रुतेषु तेषामपि प्रवृत्तिनिमित्तमिदमेवेति । उत्तरार्धस्यार्थमाह—**एतदिति** । **प्रत्यस्तमितभेदम्, अगोचरं वचसा**मित्यनयोरर्थमभिप्रेत्याह—**ज्ञानैकाकारतया सममशब्दगोचरस्वरूपभेदमिति** । **एव**कारेण विरोधः सूचितः । भुवनाश्रितत्वस्य घटकं पदमाह—**अचिन्मिश्रमिति** । **भुवनाश्रितम्** अण्डान्तर्गतं, भोगस्थानगतमित्यर्थः । **संव्यवहार**शब्दं व्याचष्टे—**सम्यग्व्यवहारार्हभेदमिति** । **सम्यक्**छब्दः स्पष्टत्वपरः । तत्कर्म किमित्यपेक्षायाम् उत्तरश्लोकस्य तद्विवरणपरत्वमाह—**तदेव विवृणोतीति** । **स्वर्गमयश्च कामः** स्वर्गविषयेच्छेत्यर्थः । फलस्य वक्ष्यमाणत्वात्—देवतायाः, फलस्य च यष्टव्यत्वेन, साध्यत्वेन च कर्मान्तर्भावः । **इत्यादि**शब्देन दानहोमादिकं च, पापं चोक्तं भवति । **भूरादि**शब्देन पापफलमप्युक्तं भवति । पश्वादिपरिकरयुक्तो यज्ञ एकं कर्म, एवंविधयज्ञात्मकं, दानहोमाद्यात्मकं च कर्म तत्र हेतुः । **आश्रितमार्गदृष्टं** तैस्तैराश्रिता मार्गा वर्णाश्रमाः तेषु दृष्टमित्यर्थः । अनन्तरश्लोकार्थमाह—**जगदिति** । कर्मवश्यः सर्वत्र व्रजति हि । यद्वा, कर्मवश्यो हि सर्वत्र व्रजति तस्मादेवं कुर्यादित्यर्थः । निगलित एव हि सर्वत्र कारागृहे चरति अतस्तन्मोचनाय यतत इति भावः । **ध्रुवम्** अचलम् । **सदैकरूपं** स्वरूपतो गुणतश्च एकरूपमित्यर्थः । यद्वा, स्वरूपतो गुणतो रूपतश्च एकरूपमित्यर्थः । **तस्मान्न तदेव**मिति पूर्वेणान्वयः ॥

एवं श्लोकानां स्वोक्तार्थानुगुण्यमुपपाद्य, परोक्तार्थाननुगुणत्वमुपपादय**ति अत्रेत्यादिना** । किंचिदपि पदं न दृश्यत इति न वाच्यं; नास्त्यादिशब्दाः, सामानाधिकरण्यम्, अज्ञानवाचिपदजातं चानुगुणमिति चेत्, तत्राह—**अस्तीति** । **परमस्येत्यादिपरमपरेशा**दिशब्दानां भवत्पक्षे मुख्यार्थासिद्धिरिति भावः । हेत्वन्तरं चाह—**अस्तिनास्तिसत्यासत्येति** ।

नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ । अतश्च ताभ्यामसत्यत्वं हि प्रतीयते नानिर्वचनीयत्वम् । अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ । अपि तु विनाशित्वपरौ । **'वस्त्वस्ति किम्'** ( वि. पु. २।१२।४१ ), **मही घटत्वम्'** ( वि. पु. २।१२।४२ ) इत्यत्र विनाशित्वमेव ह्युपपादितं न निष्प्रमाणकत्वं, ज्ञानबाध्यत्वं वा । एकेनाकारेणैकस्मिन्काले॒ऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् । तुच्छत्वं हि प्रमाणसंबन्धानर्हत्वम् । बाधोपि यद्देशकालादिसंबन्धितया यदस्तीत्युपलब्धं तस्य तद्देशकालादिसंबन्धितया नास्तीत्युपलब्धिः, न तु कालान्तरेऽनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः; कालभेदेन विरोधाभावात् । अतो न मिथ्यात्वम् । एतदुक्तं भवति—ज्ञानस्वरूपसात्मवस्त्वादिमध्यपर्यन्तहीनं सततैकस्वरूपमिति—स्वत एव सदास्तिशब्दवाच्यम्, अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति—सर्वदा नास्त्यर्थगर्भमिति—नास्त्यसत्यशब्दाभिधेयमिति । यथोक्तम्—**'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥'** ( वि. पु. २।१३।९५ ), **अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ॥'** ( वि. पु. २।१४।२४ ) इति देशकालकर्मविशेषापेक्षयास्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इति ह्यपरमार्थ इत्युक्तम्, आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम् । श्रोतुश्च मैत्रेयस्य **'विष्ण्वाधारं यथा**

---

प्रथमश्चशब्दस्त्वर्थः । स्वोक्तयोजनायामनुगुणस्य शब्दस्य परपक्षाननुगुणत्वरूपं वैषम्यमस्तीति भावः । **अस्तिसत्य**शब्दौ दृष्टान्तार्थौ—यथा**स्तिसत्य**शब्दौ न सद्विलक्षणपरौ, तथा **नास्त्यसत्य**शब्दावपि नासद्विलक्षणपरावित्यर्थः । कथमनिर्वचनीयवस्त्वभिधानासामर्थ्यमित्यत्राह—**नास्तीति** । अर्थद्वारको हि विरोधः । ततः किमित्यत्राह—**अतश्चेति** । यद्वा, **अनिर्वचनीयवस्त्वभिधानासामर्थ्या**दिति व्युत्पत्त्यभाव उक्तः । परस्परविरुद्धार्थत्वमत्र हेत्वन्तरतयोक्तम् । **चः** समुच्चये । तथापि सत्वाभावात्तुच्छत्वं, मिथ्यात्वं वोक्तं भवतीति चेत्तत्राह—**अत्रेति** । कथं विनाशित्वपरावित्यत्राह—**वस्त्वति** । विनाशित्वमेव मिथ्यात्वमिति शङ्कायां विनाशित्वस्वरूपं शोधयति—**एकेनेति** । एकेनाकारेण कालान्तरेऽनुभूतस्य कालान्तरे आकारान्तरेणोपलब्धिरस्तु, ततः कथं विनाशित्वं तुच्छत्वमिथ्यात्वव्यावृत्तमिति शङ्कायां तुच्छत्वादिस्वरूपं शोधयति—**तुच्छत्वं हीत्यादिना** । **परिणामादिनेति** । **परिणाम**शब्दः परिणामसामान्यपरः, तद्विशेषपरश्च । यथा—**वाद**शब्दः सर्वकथासाधारणः, वीतरागकथामात्रपरश्च—तद्वत् । अत्रायं **परिणाम**शब्दो वर्धमानावस्थावाची; **परिणामर्धिजन्मभि**रिति प्रयोगात् । 'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूत'मिति वक्ष्यमाणवचनकटाक्षेणैवमुक्तम् । **परिणाम**शब्दस्य विकारमात्रपरत्वे **आदि**शब्दः प्रदेशान्तरगमनपरः । कालान्तरानुभूतस्य कालान्तरे नास्तीत्युपलब्धिः कथं न बाध इत्यत्राह—**कालभेदेनेति** । विरोधे हि बाधः, बाध्यत्वं हि मिथ्यात्वमित्यभिप्रायेणाह—**अत** इति । परिणामित्वापरिणामित्वयोरर्थयोर्न हि **नास्त्यसत्या**दिशब्दाः पारिभाषिकाः तत्कथं तदभिधानप्रकारः; परिणामास्पदस्यापि वस्तुनो नित्यत्वात् **नास्ति**शब्दाभिधेयत्वं चानुपपन्नमित्यत्राह—**एतदुक्तं भवतीति** । सततैकरूपत्व**मस्ति**शब्दप्रवृत्तिनिमित्तं, विनाशगर्भत्वं **नास्ति**शब्दप्रवृत्तिनिमित्तमित्यर्थः । घटावस्थायां पिण्डो नास्ति, कपालावस्थायां घटो नास्ति, चूर्णावस्थायां न कपालसत्तेति—सदा नाशगर्भत्वम् । उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः, तदवस्थस्य सैवोत्पत्तिः तस्मा**न्नास्ति**शब्दाभिधेयत्वम् अचिद्वस्तुनः, चिद्वस्तुनस्तु अवस्थान्तरापत्त्यवस्थान्तरप्रहाणाभावेनैकरूपत्वान्न विनाशगर्भत्वमतस्त**दस्ति**शब्दवाच्यमेव, यत्सदास्त्येव त**दस्ति**शब्दवाच्यम् । सिद्धे 'शब्दार्थसंबन्धे' इत्यत्र सिद्धशब्दवदवधारणगर्भोऽयं शब्दः । तत्र हि सिद्ध एवेति व्याख्यातमब्भक्षो वायुभक्ष इत्यादि दृष्टान्तीकृत्य, तथा अत्रापीत्यर्थः । **अस्तिनास्ती**तिशब्दानां प्रवृत्तिनिमित्तमिदमेवेत्यस्मिन्नर्थे प्रमाणमाह—**यथोक्तमिति** । असदसत्यसत्सत्यादिशब्दानां मिथ्यात्वामिथ्यात्वयोः प्रसिद्धिस्वारस्यमस्तीति शङ्कायां मिथ्यागर्भितत्वमपि दर्शयति—**देशेति** । **कर्मविशेषापेक्षयेति** । पालनरञ्जनादिसद्भावासद्भावाभ्यां राजत्वपितृत्वादिरूपेणास्तित्वं, नास्तित्वं च कर्मापेक्षम् । औपाधिकास्तित्वयोगिनि वस्तुनि स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वं न परमार्थ इत्यर्थः । अपरमार्थत्वगर्भास्त्यर्थोपेतत्वादन्वितो नास्त्यसत्यादिशब्दवाच्यत्वमित्युक्तम्, आत्मनः स्वाभाविकास्तित्वयोगात्—तत्र तद्बुद्धिविषयत्वमपरमार्थ इत्याह—**आत्मन एवेति** । पदशो दशश्लोक्यामुक्तमर्थं श्रोतुरनुवादप्रकारेण द्रढयति—**श्रोतुश्चेति** । **प्रधानतः** ब्वेकयोरितिवद्भावप्रधाननिर्देशः प्राधा-

**चैतत्त्रैलोक्यं समवस्थितम्। परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः॥'** (वि. पु. २।१३।२) इत्यनुभाषणाच्च। **'ज्योतींषि विष्णुः'** (वि. पु. २।१२।३८) इत्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनं, चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनं, ज्ञानस्याकर्मनिमित्तस्वाभाविकस्वरूपत्वेन प्राधान्यम्, अचिद्वस्तुनश्च तत्तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यम्—इति प्रतीयते। यदुक्तं—निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय—इति, तदसत्; **'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्'** (श्वे. ३।८), **'तमेव विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय'** (तै. आ. ३।१३।१), **'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। न तस्येशे कश्चन। तस्य नाम महद्यशः। य एनं विदुरमृतास्ते भवन्ति'** (म. ना. १।८-१०-११) इत्याद्यनेकवाक्यविरोधात्। ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति। शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम्। तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरं; तत्त्वंपदयोः सविशेषब्रह्माभिधायित्वात्। तत्पदं हि सर्वज्ञं सत्यसंकल्पं जगत्कारणं ब्रह्म परामृशति। **'तदैक्षत बहु स्याम्'** (छा. ६।२।३) इत्यादिषु तस्यैव प्रकृतत्वात्। तत्समानाधिकरणं त्वंपदं चाचि-

---

न्येनेत्यर्थः। **प्राधान्य**मुत्कर्षः। अनुभाषणश्लोकपूर्वार्धफलितमर्थमाह—**ज्योतींषीति**। तदेकधार्यद्रव्यत्वं हि शरीरलक्षणम्, अतो **विष्ण्वाधार**मित्यनेनात्मशरीरभावः सिद्धः। उत्तरार्धफलितमर्थमाह—**चिदचिदिति**। ज्ञानप्राधान्यं कण्ठोक्तं, तेनाचिद्वस्तुनोऽप्राधान्यस्यार्थसिद्धत्वादाह—**अचिद्वस्तुनश्चेति**। **प्राधान्याप्राधान्ये** उत्कर्षापकर्षौ तौ चापरिणामित्वपरिणामित्वलक्षणौ, न मिथ्यात्वामिथ्यात्वलक्षणौ; धर्मिणि सति हि प्राधान्याप्राधान्ये, प्रतीतिमात्रसिद्धं हि मिथ्या; अतो न तत्राप्राधान्यशब्दः स्वरस इत्यभिप्रायः। **इत्यविद्यायाः स्मृतिपुराणसिद्धत्वनिरासः॥ इति प्रमाणानुपपत्तिः॥**

अथ निर्विशेषब्रह्मात्मैक्यज्ञानस्य निवर्तकत्वपरत्वेन परोक्तश्रुतीनामतदर्थत्वं वक्तुं परोक्तमनुवदति—**यदुक्तमिति**। परिहरति—**तदसदिति**। तत्र ज्ञानस्य निर्विशेषवस्तुविषयत्वं तेनात्मैक्यविषयत्वं च परिहरिष्यन् प्रथमं निर्विशेषवस्तुविषयत्वं व्युदसितुमुपादत्ते—**वेदाहमिति**। अनेन विग्रहादिविशिष्टविषयज्ञानमेवोपायः, नान्य इत्युक्तम्। एतत्समानार्थत्वादाह—**सर्वे निमेषा इति**। तत्र हि 'अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टा'विति प्रतीकोपादानं कृतम्। अनेन विशेषणेन **विद्यु**च्छब्दश्च व्याख्यातो भवति। **विद्युतः** विद्युद्वर्णादित्यर्थः; आदित्यवर्णमित्येनेनैकार्थ्यात्। **न तस्येशे कश्चन** इत्यनेन उपायभूतं ज्ञानान्तरं नास्तीति फलितम्। अधिकज्ञेयान्तराभावात्—उक्ताकारविशिष्टपुरुषवेदनस्योपायत्वं दर्शयति—**य एनं विदुरिति**। एषामन्येषामप्या**दि**शब्दगृहीतानां च वाक्यानामुपादानम्—अनेकवाक्यविरोधप्रदर्शनाय। ननु—सदेवैकमेवेत्यादिकारणवाक्येषु निर्विशेषस्य प्रतिपन्नत्वात्—तज्ज्ञानमेव साक्षान्मोक्षोपाय इति—सगुणज्ञानस्योपायत्वं तद्व्यवधानेन स्यात्। यद्वा, सगुणज्ञानोपायत्वपरवाक्येऽपि न सगुणत्वे तात्पर्यं, वस्तुमात्रमेव लक्ष्यत इति चेत्, तत्राह—**ब्रह्मण इति**। सद्विद्यादिष्वपि सगुणविषयत्वोपपादनात्, यथावस्थितस्वरूपविषयज्ञानस्यैव मोक्षोपायत्वात्—तान्यपि सविशेषज्ञानोपायत्वपराणीत्यर्थः। तर्हि शोधकवाक्यैर्विरोध इत्यत्राह—**शोधकेति**॥

एवं ज्ञानस्य निर्विशेषवस्तुविषयत्वं तद्विरुद्धवचनोदाहरणेन प्रतिक्षिप्तम्, अथ तत्त्वमस्यादिसामानाधिकरण्यान्यथानुपपत्त्या—निर्विशेषज्ञानमेवोपाय इति शङ्कायां तस्य जीवपरैक्यविषयत्वं व्युदस्यति—**तत्त्वमस्यादीति**। शोधकवाक्येषु सामानाधिकरण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरं, तत्त्वमस्यादिषु जीवब्रह्मणोः सामानाधिकरण्यमन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्, अचिद्ब्रह्मणोस्तु **सर्वं खल्विदं ब्रह्मे**त्यादावतात्त्विकरूपारोपणेन सामानाधिकरण्यं, **ज्योतींषि विष्णु**रित्यादौ बाधार्थम्—इति चतुर्धा हि परैः सामानाधिकरण्यं तत्र तत्राभ्युपेतं, तत्र तत्त्वमस्यादिवाक्येऽन्वयमुखेन वस्तुमात्रपरत्वं, गत्यभावे बाधार्थत्वं चाशङ्क्य निराक्रियते, तत्र प्रथमं वस्त्वैक्यपरत्वं दूषयितुमाह—**न निर्विशेषवस्त्वैक्यपरमिति**। कुत इत्यत्राह—**तत्त्वमिति**। तच्च कथमित्यत्राह—**तत्पदं हीति**। हिहेतौ सर्वज्ञत्वादिगुणकप्रतिपादनं कथमित्यत्राह—**तदैक्षतेति**। तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वं व्युत्पत्तिसिद्धं, यथा—शुक्ला शोभनाक्षी सदीया पूर्णशृङ्गा घटोध्नी गौस्तामानयेति। ननु—गौस्तिष्ठति तामानयेत्यादावानयनादिक्रियानर्हस्थित्यादिविशेषणविधुरवस्तुपरामर्शित्वं दृश्यते तच्च मुख्यं, नैवम्; आनयनसमकालान्वयायोग्येनापि स्थित्यादिविशेषणेन पूर्वकालवैशिष्ट्यस्य विवक्षितत्वात्; अन्यथा धावतोऽपि गोपिण्डस्यानयनादिप्रसङ्गः। विशेषणं विशेष्ये वस्तुनि यथान्वयार्हं तथाऽन्वितस्य तस्यापरित्यागो हि विवक्षितत्वं,

द्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति; प्रकारद्वयावस्थितैकवस्तुपरत्वात्सामानाधिकरण्यस्य। प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासंभवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्, द्वयोः पदयोर्लक्षणा च। सोयं देवदत्त इत्यत्रापि न लक्षणा; भूतवर्तमानकालसंबन्धितयैक्यप्रतीत्यविरोधात्। देशभेदविरोधश्च कालभेदेन परिहृतः। **'तदैक्षत बहु स्याम्'** (छा. ६।२।३) इत्युपक्रमविरोधश्च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च न घटते। ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानं, तत्कार्यानन्तापुरुषार्थाश्रयत्वं च न संभवति। बाधार्थत्वे च सामानाधिकरण्यस्य तत्त्वंपदयोर-

---

प्रकृतसर्वविशेषणेष्वेकस्यापि परित्यागे प्रकृतत्वमेव हीयेत; शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौस्तामानयेत्युक्ते शौक्ल्येतरसमस्तविशेषणान्वितव्यक्त्यानयनेऽपि प्रकृतव्यक्तेरानीतत्वाभावात्; अतः सविशेषे प्रकृते निर्विशेषस्य प्रकृतत्वं दूरोत्सारितम्। न च प्रकृतसर्वविशेषणपरित्यागेऽपि धर्म्यैक्येन प्रकृतत्वसिद्धिः; सर्वाकारप्रहाणे प्रतिसंधानानर्हत्वात्। न ह्यपवरके घटोऽस्ति तमानयेत्युक्ते घटत्वाविवक्षायां मृन्मात्रस्य सिद्धिः प्रकृतत्वसिद्धिः। कथमेकाकारपरित्यागेऽप्यसंभवत्प्रकृतत्वं सर्वाकारपरित्यागे संभवति, अङ्गुलीयकत्वप्रहाणेपि कनकं प्रतिसंधीयत इति चेत्, सत्यं, प्रत्यक्षेण तच्छब्दस्तु प्रकृताकारप्रहाणे प्रतिसन्धानमेव जनयितुं न शक्नोति, अत एव हि यदङ्गुलीयकं तदानयेत्युक्ते कनकमात्रं नानीयते, अतः प्रकृतसर्वाकारप्रहाणे प्रतिसन्धानानर्हस्य वस्तुनः प्रकृतत्वमेव नास्तीति—तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यात्। तत्पदोपस्थापितसार्वज्ञ्यादीनां, त्वंपदोपस्थापिताज्ञत्वादीनां च विरोधान्निर्विशेषपरत्वमिति चेत्, तत्राह—**तत्समनाधिकरणमिति**। घटस्य शुक्ल इत्यादिव्यधिकरणवाक्येषु धर्मवाचिपदस्य धर्मिपर्यन्तत्वाभावात् तद्व्यावृत्त्यर्थं **तत्समानाधिकरण**मित्युक्तम्। **अचिद्विशिष्टजीवशरीरकमिति**। अज्ञत्वादिगुणानां सर्वज्ञत्वादिगुणके परमात्मनि विरोधः सद्वारकतया परिहृत इत्यर्थः। **त्वं**पदप्रवृत्तिनिमित्तसंबोधनीयार्थत्वरूपाभिमुख्यविशेषप्रयोजकोपलक्षणाभिप्रायेणा**चिद्विशिष्टजीवे**त्युक्तम्। समानाधिकरणत्वे सति कथं **त्वं**पदं जीवविशिष्टब्रह्मपरमित्यत्राह—**प्रकारद्वयेति। प्रकारद्वयावस्थितं** प्रकारद्वयविशिष्टम्। प्रकृत**तत्त्वं**पदप्रवृत्तिनिमित्तपरः **प्रकारद्वय**शब्दो न्यूनत्वनिवर्तकः, न तु प्रकारत्रित्वादिव्यवच्छेदपरः। तदुपपादयति—**प्रकारद्वयपरित्याग इति**। दूषणान्तरमाह—**द्वयोरिति**। अविरोधेन मुख्यतया निर्वाहे संभवति एकस्यापि पदस्य लक्षणा न युक्ता, विरोधे सत्यपि एकपदलक्षणयैवाविरोधः सिध्यतीति पदद्वयलक्षणाऽनुपपन्नेत्यर्थः। ननु—पदद्वयलक्षणा न दूषणं; 'सोऽयं देवदत्त' इत्यादिषु दृष्टत्वात्, तत्र हि देशकालविशिष्टाकारे देशकालान्तरान्वयविरोधाल्लाक्षणिकमेव पदद्वयं तत्राह—**सोऽयमिति**। किमेकस्य देशद्वयसंबन्धे विरोधः, उत कालद्वयसंबन्ध इति विकल्पमभिप्रेत्याह—**भूतेति**। न हि विशिष्टाकारे विशेषणान्तरान्वयः, अपि तु विशेष्यमात्रे, अतः कालद्वयसंबन्धो न विरुद्धः, यदि विरुद्धः तर्हि बौद्धोक्तं क्षणिकत्वमेवापद्येत। अनेककालसाध्यधर्मविधानं, फलप्राप्तिश्च नोपपद्येयातामिति भावः। देशभेदेति यद्येकस्य देशद्वयसंबन्धविरोधः, तर्हि—विष्णुक्रमणतीर्थस्नानादिविधिर्नोपपद्यते, प्रत्यभिज्ञाविरोधश्चेति भावः। यौगपद्यं कथं संभवतीति चेत्, उच्यते—देशद्वयसंबन्धस्य, कालद्वयसंबन्धस्य वा न युगपद्भावः, तत्प्रतिपत्तेरेव हि यौगपद्यं, प्रतिपत्तिस्तु देशद्वयकालद्वयसंबन्धं क्रमभाविनमेव दर्शयति, अतो न विरोधः; अन्यथाऽतीतानागतविषयज्ञानेष्वतीतानागतविषययोर्वर्तमानत्वं ज्ञानस्यातीतानागतत्वं वा प्रसजेदिति। दूषणान्तरमप्याह—**तदैक्षतेति**। उपक्रमाधिकरणेन ह्युपक्रमप्राबल्यमुक्तमिति भावः। उपक्रमोपक्रमे ऐक्यस्य प्रतिपन्नत्वान्नोपक्रमविरोधः; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं हि 'तदैक्षत बहु स्या'मिति वाक्यात् पूर्वमित्यत्राह—**एकविज्ञानेनेति**। तत्र निमित्तत्वोपादानत्वतदनुगुणसार्वज्ञ्यसर्वशक्तित्वादिगुणसिद्धेरित्यर्थः। विशिष्टमेव कारणं तदेव स्थूलावस्थं कार्यमिति द्रव्यान्तरत्वाभावात्–कारणज्ञानेन कार्यज्ञानमुपपद्यते, मृषावादिनस्तु कारणज्ञाने कार्यस्य[1] विषयतयान्तर्भावोऽभिमतश्चेद्विरोधः, सत्यविषयज्ञाने मिथ्यार्थस्य विषयत्वायोगात्–मिथ्यात्वेनेत्यध्याहारश्च स्यात्, अनन्तर्भावे तज्ज्ञाते ज्ञातत्वव्यवहारो न मुख्यः स्यात्, अतोऽस्मत्पक्ष एव प्रतिज्ञावाक्यं स्वरसम्। श्रुत्यन्तरविरोधमाह—**ज्ञानस्वरूपस्येति। ज्ञानस्वरूपस्य, सर्वज्ञस्ये**त्यनेन धर्मिधर्मभूतज्ञाने विवक्षिते। सर्वज्ञस्याज्ञत्वं, निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्यानन्तापुरुषार्थाश्रयत्वमिति विरोधः। **ज्ञानस्वरूपस्ये**त्यनेन तिरोधानानुपपत्तिश्च सूचिता॥

इत्थं सामानाधिकरण्यस्य निर्विशेषवस्त्वैक्यपरत्वं दूषितम्, अथ बाधार्थत्वं दूष्यते—**बाधार्थत्वे चेति**। 'रज्जुः सर्प' इत्येवंरूपं बाधार्थं सामानाधिकरण्यमेव नास्ति; सामानाधिकरण्यस्यैकस्मिन्विशेष्ये प्रकारद्वयोपस्थापकतया बाधार्थत्वविरो-

---

१ कार्यज्ञानस्य का. मु. पु.।

धिष्ठानलक्षणा, निवृत्तिलक्षणा चेति लक्षणादयस्त एव दोषाः। इयांस्तु विशेषः—'नेदं रजत'मितिवद- प्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनं, तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च। अधिष्ठानं तु प्राक्तिरोहितमतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति—चेन्न; प्रागधिष्ठानाप्रकाशे तदाश्रयभ्रम- बाधयोरसंभवात्। भ्रमाश्रयमधिष्ठानमतिरोहितमिति चेत्, तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ। अतोऽधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ

---

धात्, अतः पदद्वयमुख्यार्थत्वेऽभिमते बाधार्थं सामानाधिकरण्यं न सिध्येत्। **सर्प**शब्देन नञर्थं लक्षयित्वा असर्पो रज्जुरिति निर्वाहं दृष्टान्तवाक्यस्याशङ्क्य, दार्ष्टान्तिकवाक्यस्य ततोऽप्यधिकदूषणमाह—**बाधार्थत्वे चेति**। **त्वंतत्**पदयोरित्यत्र न क्रमविवक्षा। **तत्**पदमधिष्ठानमात्रं लक्षयति, **त्वं**पदं जीवभावनिवृत्तिं लक्षयति। यद्वा, **त्वं**पदेनाधिष्ठानलक्षणा, **तत्**पदेन निवृत्तिलक्षणा। **आदि**शब्देन सामानाधिकरण्यलक्षणहानिः, उपक्रमविरोधः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः, श्रुत्यन्तरविरोधश्चेति दूषणानि विवक्षितानि। उक्तदृष्टान्तात्, उपलक्ष्यसामानाधिकरण्याच्च—दूषणमत्राधिकमित्याह—**इयांस्तु विशेष इति**। बाधार्थत्वे विशेषो न पूर्वोक्तदूषणहानिः, अपि तु तैः सह वक्ष्यमाणाधिकदूषणद्वयापात एव विशेष इत्यर्थः। अधिकं दूषणमाह—**नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनमिति**। 'शुक्तिरेव रजत'मित्यत्र प्रमाणान्तरेण 'नेदं रजत'मिति बाधस्य प्रतिपन्नत्वाद्बाधकल्पनम्, अत्र बाधस्याप्रतिपन्नत्वेऽप्यगत्या बाधकल्पनमित्यर्थः। **तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्चेति**—'शुक्तिरेव रजत'मित्यत्र शुक्तित्वरूपं विरुद्धधर्मं शब्द एवोपस्थापयति अतस्तत्र बाधकल्पनम्, अत्र त्वधिष्ठानमात्रं लक्षयता **तत्पदेन** शुक्तित्ववद्विरुद्धधर्मानुपस्थापनात्—बाधकल्पनमनुपपन्नमित्यर्थः। विरोधपरिहारार्थं लक्षणा चेत्, अन्यतरपदलक्षणैव विरोधपरिहारायालं, तदा सविशेषत्वप्रसङ्ग इति चार्थसिद्धः। प्रमाणान्तरेण बाधस्य प्रतिपन्नत्वात्, शब्देन विरुद्धधर्मोपस्थापनाच्च—बाधकल्पनम्, अत्र तूभयाभावात्तदनुपपन्नमित्युक्तम्। तत्र विरुद्धाकारोपस्थापनं शङ्कते—**अधिष्ठानं त्विति**। तदधिष्ठानमतिरोहितस्वरूपं यथा भवति तथोपस्थाप्यत इति क्रियाविशेषणम्। अप्रकाशितविरोधिप्रकाशनं हि बाधकल्पनं, न तु धर्मोपस्थापनमेव बाधकल्पनमिति नियमोऽस्ति, अत**स्तत्**पदेन प्रागप्रकाशितविरोध्यधिष्ठानस्वरूपप्रकाशनाद्बाधकल्पनमित्यर्थः। अत्राह—**नेति**। किं विरोधिरूपमधिष्ठानं प्रकाशते, उत नेति विकल्प्य, अप्रकाशपक्षे दूषणमाह—**अधिष्ठानेति**। **तदाश्रये**त्या**श्रय**शब्दो विषयपरः। यद्वा, तदधिष्ठानकभ्रमबाधयोरित्यर्थः। प्रकाशपक्षं शङ्कते—**भ्रमेति**। **भ्रमाश्रयमधिष्ठान**मित्यत्र पाठो निरीक्षणीयः। **आश्रय**शब्दो विषयपरः। **भ्रमाश्रय**मित्यत्र भ्रमस्याश्रयणं–विषयीकरणं यत्रेति वैयधिकरण्येन वा, भ्रम आश्रय आश्रयणीयः संबन्धनीयो येनेति सामानाधिकरण्येन वा कथंचित् बहुव्रीहित्वमपि निर्वोढुं शक्यम्। आरोप्याकाराधिकरणभूतमधिष्ठानमिति वार्थः। भ्रमाश्रयत्वायातिरोहितमिति चेदित्यर्थः। दूषयति—**तदेवेति**। किमिदमधिष्ठानं विरोधिरूपम्, उताविरोधीति—विकल्पाभिप्रायेण विरोधीति पक्षे दूषणमुक्तम्, अविरोधित्वपक्षे बाधकल्पनानुपपत्तिः, भ्रमानुच्छेदश्चेति दूषणं स्पष्टमिति न तदुक्तम्। **अत इति**। **पारमार्थिक**शब्दस्यायमभिप्रायः—भ्रमविरोध्याकारस्यापारमार्थिकत्वे अध्यस्तरूपमेव सत्यं स्यात्, यथा—शुक्तित्वापारमार्थ्ये रजतत्वं सत्यं भवतीति—यदिदं चोद्यम्। विरोध्याकारस्यापारमार्थ्येऽपि भ्रमनिवृत्तिरुपपद्यते, यथा—पलाशपुष्पविषयदावभ्रमवतो भ्रमरस्य वृन्तविषयभ्रमरभ्रमेण पलाशपुष्पं श्लिष्यतः पलाशपुष्पविषयदावभ्रमः, वृन्तविषयभ्रमरभ्रमश्च निवृत्त इति। यथाहुः—'भ्रमरी भ्रमरभ्रमेण वृन्ते यददावभ्रममाश्लिषत्पलाश'मिति, तदयुक्तं; तत्रापि परमार्थविरोध्याकारेणैव भ्रमविषयनिवृत्तेः। दावत्वविरोधी पलाशपुष्पत्वाकारः परमार्थः, भ्रमरत्वविरोधी वृन्तत्वाकारश्च परमार्थः; अपरमार्थत्वे दावत्वं, भ्रमरत्वं च सत्यं स्यात्। शुक्तित्वे अपरमार्थे रजतत्वमिव वृन्तविषयभ्रमरभ्रमेण दावत्वभ्रमनिवृत्तिरिति चेत्, ततः किं, दावत्वबुद्धिनिवृत्तिर्भ्रमरत्वस्य सत्यत्वप्रतिपत्तिकृता, ततश्चासत्ये सत्यत्वविषयभ्रमान्तरं तिष्ठति, तन्निवृत्तिरप्यसत्यविषयसत्यत्वभ्रमान्तरेणेति—भ्रमपरम्परया निःशेषाविद्यानिवृत्त्यनुपपत्तिः। किंच—दावत्वविषयधीनिवृत्तावपि दावत्वनिवृत्तिर्न भ्रमरभ्रमेण, अपि तु परमार्थपुष्पत्वाकारेणैव; अन्यथा परमार्थरजते अपरमार्थशुक्तित्वबुद्ध्या रजतधीनिवृत्त्या—रजतस्यापि शुक्तित्वप्रसङ्गात्। भ्रमान्तरेण भ्रमान्तरनिवृत्तावनवस्था च स्यात्; निवर्तकभ्रमान्तरस्यापि निवर्तकान्तरापेक्षत्वात्, यथा—रज्जुविषयसर्पभूदलनाम्बुधाराभ्रमपरम्परायाः। किंच भ्रमरभ्रमनिवृत्त्यनन्तरं निवर्तकापारमार्थ्यज्ञानादापतद्दावभ्रमः परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्तः, अतो निःशेषाविद्यानिवृत्तिलक्षणमोक्षवादिना भ्रमपरम्परापर्यवसानार्थमन्ततो गत्वा परमार्थाकारोऽभ्युपगन्तव्यः—रज्जुत्ववत्। चरमभ्रमः स्वयमेव न स्यादिति—चेन्न; स्वयं स्वबाधकत्वे कर्मकर्तृविरोधप्रसङ्गात्। किंच—बाधकस्य सत्यात्मकत्वात्, बाध्यस्य मिथ्यात्वात्—एकस्यैव निवर्त्यनिवर्तकत्वाभ्युपगमे—तस्यैव मिथ्यात्वं, सत्यत्वं चेति विरोधः स्यात्। किंच प्रपञ्चोऽपि बाधकानपेक्षः स्वयमेव स्वात्मानं निवर्तयेत्, स्वयं नाशे विनाशस्यावस्थान्तररूपत्वादविद्या सूक्ष्मरूपेण स्थिता स्यात्, नाशकल्पकाविद्यान्तरं च स्यात्। परमार्थविरुद्ध-

दुरुपपादौ । अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः । राजत्वोपदेशेन च तन्निवृत्तिर्भवति, नाधिष्ठानमात्रोपदेशेन; तस्य प्रकाशमानत्वेनानुपदेश्यत्वात्, भ्रमानुपमर्दित्वाच्च । जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् । प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम् । निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति । उपक्रमानुकूलता च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च; सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् । **'तमीश्वराणां परमं महेश्वरम्'** (श्वे. ६।७), **'परास्य शक्तिर्विविधैव श्रूयते'** (श्वे. ६।८), **'अपहतपाप्मा'** (छा. ८।१।५-८।७।१), **'सत्यकामः सत्यसंकल्पः'** (छा. ८।१।५-८।७।१), इत्यादिश्रुत्यन्तराविरोधश्च । **'तत्त्वमसि'** (छा. ६।८।७) इत्यत्रोद्देश्योपादेयविभागः कथमिति चेत्, नात्र किंचिदुद्दिश्य किमपि विधीयते । **'ऐतदात्म्यमिदं सर्वम्'** (छा. ६।८।७) इत्यनेनैव प्राप्तत्वात्; अप्राप्ते हि शास्त्रमर्थवत् । **इदं सर्व**मिति सजीवं जगन्निर्दिश्यै**तदात्म्य**मिति तस्यैष आत्मेति तत्र

---

धर्मतत्तिरोधानाभावे—भ्रमबाधासंभवं दृष्टान्तेनोपपादयति—**अधिष्ठाने हीति** । अत्र राजकुमारसमाविर्भगवतो भाष्यकारस्य ॥

एवं बाधार्थत्वं दूषितम्, अथ स्वपक्षे इमानि दूषणानि न सन्तीत्याह—**जीवशरीरकेति** । **मुख्यवृत्त**मित्यनेन लक्षणाहानिरुक्ता । **प्रकारद्वये**त्यनेन सामानाधिकरण्यसिद्धिः । **निरस्तनिखिलदोषस्ये**त्यादिना **त**त्पदोक्तगुणाविरोधः, **उपक्रमानुकूलता चे**ति 'सदेव सोम्येदं, तदैक्षते'त्युपक्रमाविरोध उक्तः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः कथमित्यत्राह—**सूक्ष्मेति** । विशिष्टं कारणं तदेव कार्यमिति **प्रतिज्ञोपपत्ति**रित्यर्थः । श्रुत्यन्तराविरोधमाह—**तमीश्वराणामिति** । वाक्यं चेदुद्देश्योपादेयविभागवत्, उद्देश्यं ह्यवगतम्, उपादेयं विधेयमनवगतम्, अत्र **त**त्पदं नोद्देश्यसमर्पणपरं; सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वात् । **त्वं**शब्दस्य चान्तर्यामिपरत्वे सत्युद्देश्यसमर्पकत्वमनुपपन्नम्; अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वात्, तस्मात् **त्वं**शब्देन जीवमात्रमुद्दिश्य तस्य **त**त्पदेन ब्रह्मभावो विधीयत इत्यभ्युपगन्तव्यं, तत्र विरोधान्निर्विशेषवस्त्वैक्यपरं सामानाधिकरण्यं भवतीत्यभिप्रायेण चोदयति—**तत्त्वमसीत्यत्र उद्देश्योपादेयविभागः कथमिति चेदिति** । परिहरति—**नात्रेति** । प्रमाणान्तरागोचरार्थस्य कथमविधानमित्यपेक्षायां—न केवलं प्रत्यक्षाद्यवगतार्थविषयमेव वाक्यमनुवादकम्, अपि तु वाक्यान्तरप्रतिपन्नार्थविषयमप्यनुवादकम्—इत्यभिप्रायेण वाक्यान्तरप्राप्तिं दर्शयति—**ऐतदात्म्यमिति** । अस्मिन्नेव प्रकरणे प्रथमप्रतिपन्ननामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकशब्दानां परमात्मपर्यन्ताभिधायित्वं च ज्ञातमिति भावः । ततः किमित्यत्राह—**अप्राप्ते हीति** । अप्रतिपन्नार्थविषयं शास्त्रमज्ञातज्ञापनरूपप्रयोजनवदित्यर्थः । अतस्तदेवोद्देश्योपादेयविभागवत्, न तु प्रकृतनिगमनरूपं वाक्यम्, अतोऽस्य निगमनवाक्यस्य प्रतिपन्नार्थविषयत्वान्नोद्देश्योपादेयविभागवत्त्वमिति भावः । ननु—निगमनवाक्यस्याप्युद्देश्योपादेयविभागवत्त्वं प्रतीयते, यथा—'तस्माच्छब्दोऽनित्यः, तस्मादयमग्निमा'नित्यत्र शब्दपर्वताद्युद्देशेन अनित्यत्वाग्निसत्त्वादिकं हि विधेयतया प्रतीयते, नैतद्युक्तं; प्रतिपादितार्थविषयस्य निगमनवाक्यस्याप्रतिपन्नार्थविषयत्वव्याघातात् । प्रतीतिस्तु विधायकवाक्यस्थोद्देश्योपादेयसमर्पकपदप्रत्यभिज्ञानात्, निर्देशे प्रथमचरमभावादिसारूप्याच्च—उद्देश्योपादेयविभागवत्त्वभ्रान्तिरेव । 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षण'मिति हि नीतिविदः । ननु—सर्वत्रोद्देश्यानुगुणा तिङ्विभक्तिः, अतएव हि युष्मदस्मदोः पदान्तरसामानाधिकरण्येन, परस्परसामानाधिकरण्येन च प्रयोगेषूद्देश्यानुगुणा मध्यमोत्तमपुरुषव्यवस्था दृश्यते—'त्वं भूतानामधिपतिरसि, अहमस्मि प्रथमजा ऋतस्य' तथा 'यदग्ने स्यामहं त्वं त्वं वा स्या अहं स्युष्टे सत्या इहाशिष' इत्यादिषु । **अग्ने अहं त्वं यदि स्यां** त्वमिव देवता स्यां, **त्वमहं यदि स्याः** अहमिवार्थी स्याः, तदा **ते** तवा**शिषः सत्याः स्यु**रित्यर्थः । तस्मा**त्तत्त्वमसी**त्यत्रापि मध्यमपुरुषप्रयोगात् **त्वं**पदस्योद्देश्यसमर्पकत्वं, **त**त्पदस्योपादेयसमर्पकत्वमकामेनापि स्वीकार्यं, नैवं; पदद्वयावगतार्थस्य पूर्ववाक्यप्राप्तत्वादेव । तर्हि मध्यमनिर्देशः कथमिति चेत्, उच्यते—**तत्त्वं**पदयोरुभयोरपि प्रयुक्तत्वात्, उद्देश्योपादेयविभागाभावाच्च—प्रथममध्यमपुरुषयोरविशेषेण प्राप्तौ—निगमनवाक्यस्य प्रापकवाक्यानुरोधित्वस्य न्याय्यत्वात्, तत्र च 'इदं सर्वमिति निर्दिष्टजगदन्तर्गतचिद्विशेषविशिष्टपरमात्मवाचिन**स्त्वं**पदस्य प्रापकवाक्यस्थोद्देश्यवाचिपदवाच्यैकदेशविषयत्वात्तदनुरोधेन मध्यमनिर्देश इति । ननु—'ऐतदात्म्यमिदं सर्व'मित्यचेतने ब्रह्मानुप्रवेशमुक्त्वा **तत्त्वमसीति** जीवब्रह्मणोः स्वरूपैक्यमुच्यत इति शङ्कायामाह—**इदं सर्वमिति सजीवं जगन्निर्दिश्येति** । **सर्व**शब्दो नाचेतन-

प्रतिपादितम् । तत्र च हेतुरुक्तः । 'सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा. ६।८।४) इति, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः' (छा. ३।१४।१) इतिवत् । तथा श्रुत्यन्तराणि च ब्रह्मणः, तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति । 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' (तै. आ. ३।११।२), यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरः । यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । स त आत्मान्तर्याम्यमृतः' (बृ. ३।७।३), 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः । यमात्मा न वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । स त अत्मान्तर्याम्यमृतः' (बृ. ३।७।२२) 'यः पृथिवीमन्तरे संचर'न्नित्यारभ्य 'यस्य मृत्युः शरीरम् । यं मृत्युर्न वेद । एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः' (ना. २), 'तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्' (तै. २।६।१) इत्यादीनि । अत्रापि 'अनेन जीवेनात्मनानुप्रविश्य

---

मात्रपरः; संङ्कोचकाभावेऽपि स्वारस्यभङ्गायोगात्, 'सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इति पूर्ववाक्ये **सर्व**शब्देन प्रजानां विशेषितत्वात्, प्रजाशब्दस्य चाचित्संसृष्टचेतनविशेषपरत्वात्, 'इदं सर्वमसृजते'त्यादिवाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः **सर्व**शब्देन निर्देशाच्चेति भावः । **ऐतदात्म्य**मिति पदं व्याचष्टे—**तस्यैष आत्मेति । इदं सर्वमिति ।** पदद्वयमुद्देश्यसमर्पकम् । **ऐतदात्म्य**मेतदात्मकत्वं विधेयम् । विशिष्टस्य ब्रह्मणः कारणतया प्रकृतत्वेऽपि-**एत**च्छब्दः चिदचिद्विलक्षणविशेष्यांशपरः; अर्थवशात् तदात्मकत्वं—मृदात्मको घट इतिवत् स्वरूपैक्यकृतं स्यादित्यत्राह—**तत्र च हेतुरुक्त इति । सदायतना** इत्यनेन आधाराधेयभाव उक्तः, अनेन शरीरशरीरिभावः सिद्धः; चेतनेन यावदात्मभावितया धार्यद्रव्यं हि शरीरम् । अस्मिन्वाक्ये हेतुत्वमप्रकटमिति तद्वैशद्यायाह—**सर्वं खल्विति ।** अत्रापि प्राणनेन सदायतनत्वं फलितं; **सन्मूला** इत्यादिवाक्येनैकार्थ्यात् । तत्र हि **सन्मूला** इति **तज्जत्वं, सत्प्रतिष्ठा** इति **तल्लत्वं, सदायतना** इति **तदनत्वं** चोच्यते, तच्चान्तःप्रविश्य प्रशासनेन धारकतया स्थितिहेतुत्वम्; 'अन्तः प्रविष्टः शास्ता जनानां, एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं विधृतं तिष्ठती'त्यादिश्रुतेः । एवं निष्कृष्टब्रह्मस्वरूपस्योपादानत्वलयस्थानत्वायोगात्, सर्वस्य **तदनत्वोक्त्या** च चिदचिच्छरीरकत्वं सिद्धम् । अतः **सर्व**शब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः । ब्रह्मशब्दस्यासङ्कोचेन स्वरूपगुणैर्निरवधिकबृहत्त्ववाचित्वात्, निष्कृष्टब्रह्मणः कारणत्वानुपपत्तिरूपार्थसामर्थ्याच्च—**ब्रह्म**शब्दः कारणावस्थचिदचिद्विशिष्टपरः । एवमुभयावस्थचिदचित्प्रकारिणो ब्रह्मण एकत्वं सामानाधिकरण्यप्रतिपाद्यमिति-कार्यकारणावस्थप्रकार्यैकत्वमस्य वाक्यस्यार्थः । चिदचित्प्रकारित्वं प्रातिपदिकबोध्यम् । अवस्थाद्वयविशिष्टवस्त्वेकत्वं सामानाधिकरण्यबोध्यमिति न वाक्यभेदः, अतो यथोक्त एवार्थः । अथ **सर्वं खल्वि**ति वाक्यप्रतिपन्नस्य तादात्म्यस्य शरीरशरीरिभावनिबन्धनत्वं नियन्तृत्वनियाम्यत्वादिना शरीरशब्देन विशदयितुं श्रुतिवाक्यनि दर्शयति—**तथेति । अन्तः प्रविष्टः शास्ते**त्येतत् **सर्वात्मक**शब्दव्याख्यानरूपम् । अनेन शरीरात्मभाव उक्तः । अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वं तत्स्पष्टीकरणार्थमुदाहरति—**यः पृथिव्यामिति । यः पृथिव्यां, य आत्मनी**ति पर्यायद्वयेन चेतनाचेतनयोर्भगवन्तं प्रति शरीरत्वमुक्तम् । **आत्मनि तिष्ठन्नि**त्युक्ते-'वेद्यामग्निस्तिष्ठति, तिले तैलं तिष्ठती'तिवत् बहिरबहिःस्थितिसाधारण्यात्तद्वैशद्यार्थमाह—**आत्मनोऽन्तर इति । अन्तरो यमयती**त्यनेन शरीरलक्षणमुक्तं, तस्मात्तन्नियाम्यं तच्छरीरमित्यर्थः । नच—'शिलापुत्रकस्य शरीर'मितिवदयं निर्देशः; अपवादकाभावे व्यतिरेकनिर्देशस्वारस्यभङ्गायोगात्, **यस्य पृथिवी शरीर**मिति व्यतिरेकनिर्देशस्वारस्यभङ्गाभावस्य प्रकरणसिद्धत्वात्, तदपवादकाभावे—तत्राप्यौपचारिकत्वाश्रयणायोगात्, अधिकरणाधिकर्तव्यभाव–व्याप्यव्यापकभाव–अङ्गप्राङ्गभाव–नियाम्यनियन्तृभावरूपविरुद्धधर्मैः स्वारस्यभङ्गस्यात्यर्थमपोदितत्वाच्च । **यं पृथिवी न वेदे**ति दृष्टान्तार्थं, यथा अचेतनं न वेत्ति, तथा चेतनोऽपीति भावः । **य आत्मनी**ति पर्यायेण परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते; नक्षत्रचन्द्रादित्यादीनामचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात्, 'यः सर्वेषु भूतेषु तिष्ठ'न्नित्यनुक्तानामपि संसृष्टजीवानां परमात्मशरीरत्वस्य पृथगुक्तत्वाच्च । नच-भूतशब्दः पृथिव्याद्यचिन्मात्रपरः; 'यस्य पृथिवी शरीरं, यस्यापः शरीर'मित्यादिना पृथिव्यबादीनां भूतानां पृथगुक्तत्वात् । **यमात्मा न वेदे**तीयत्तया वेदननिषेधः, भगवत्प्रसादेन विना तज्ज्ञानस्य शक्यत्वनिषेधो वा क्रियते । कारणावस्थमपि भगवतः शरीरं, शरीरी च नारायणाख्यो देवताविशेष इति ज्ञापयितुमाह—**यः पृथिवीमन्तरे संचरन्निति ।** मृत्युस्तमःशब्दवाच्या प्रकृतिः; तत्रैव तमःशब्दस्थाने मृत्युशब्दपाठात् । शरीरशरीरिभावस्तत्तन्नामभाक्त्वनिर्वाहक इत्याह—**तत्सृष्ट्वेति ।** न केवलं श्रुत्यन्तरानुरोधादै**तदात्म्य**शब्दार्थो निश्चीयते, स्वप्रकरणवाक्यादपीत्याह—**अत्रापीति ।** अनेन

**नामरूपे व्याकरवाणि'** (छा. ६।३।२) इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं, शब्दवाच्यत्वं च प्रतिपादितम् । **'तदनुप्रविश्य सच्च त्यच्चाभवत्'** (तै. २।६।१) इत्यनेनैकार्थ्यात्—जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते । अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेति निश्चीयते । तस्माद्ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्—तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति—**'ऐतदात्म्यमिदं सर्वम्'** (छा. ६।८।७) इति प्रतिज्ञातार्थस्य

---

जीववाचिशब्दस्य परमात्मपर्यन्तत्वमपि श्वेतकेतुनाऽवगतमिति सिद्धम् । **जीवेनात्मना** जीवशरीरकेण मया, 'व्याघ्रेण भूत्वा बहवो मयात्ता' इतिवत् । **नामरूपे** इति पदं व्याचष्टे—**वस्तुत्वं शब्दवाच्यत्वं चेति** । तत्तद्देवादिवस्तुत्वं, देवादिशब्दवाच्यत्वं चेत्यर्थः । अचिद्ब्रह्मणोस्तादात्म्यमनुप्रवेशकृतमस्तु, जीवब्रह्मणोस्तु स्वरूपैक्यकृतमेव स्यात्; जीवेन मयेति श्रवणादित्यत्राह—**तदनुप्रविश्येति** । ननु—जीवमनुप्रविष्टस्यापि ब्रह्मणो नामवाच्यत्वं न व्याकरणात् सिध्यति; नामरूपव्याकरणश्रुतेर्नामवाच्यत्वप्रतिपादनपरत्वाभावात्, यथा-रूपव्याकरणं रूपनिष्पादनमात्रं, न तु स्वस्य तद्बोध्यत्वापादनम्, एवं—नामव्याकरणमपि शब्दसृष्टिरेव, न तु तद्बोध्यत्वापादनमिति, नैवं; 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति समानवाक्य **इदं**शब्दवाच्यजगदात्मकब्रह्मणः प्रलयदशायामुपसंहृतनामरूपस्य सृष्टिदशायां नामरूपाभ्यां व्याकृतत्वश्रवणात् । **नामरूपाभ्या**मितीत्थंभावे तृतीया, नामरूपाभ्यां विशिष्टमक्रियतेत्यर्थः । नच—नामकर्तृत्वमेव नामविशिष्टत्वं, न तु नामवाच्यत्वमिति वक्तुं युक्तं; संज्ञासंज्ञिसंबन्धव्युत्पादके, नामोच्चारयितरि च—पुरुषे घटादिनामविशिष्टत्वाप्रसिद्धेः । नामवाच्यस्यैव हि नामविशिष्टत्वप्रसिद्धिः, उच्चारयितुः शब्दोपादानत्वाभावन्नामविशिष्टत्वाप्रसिद्धिः । कृत्स्नोपादानस्य तु ब्रह्मणः शब्दोपादानत्वायोगात्—रूपविशिष्टत्ववन्नामविशिष्टत्वोपपत्तिरिति—चेन्न; नभसि घटादिनामविशिष्टत्वाप्रसिद्धेः । न हि घटादिनामविशिष्टत्वे कथिते नभसो नामित्वं स्वरसतः प्रतीयते, वाच्यत्वेन शब्दसंबन्धिन्येव हि नामित्वप्रतीतिस्वारस्यम् । नच—लक्षणादिवृत्त्यापि तत्तन्नामबोध्यत्वं ब्रह्मणः संभवतीति वाच्यं; लक्षणागौणवृत्तिगोचरयोः कूलमाणवकयोर्गङ्गापदाग्निपदापेक्षया नामित्वाप्रसिद्धेः । ननु-श्येनशब्दस्य यागविशेषं प्रति गौणनामत्वं निर्णीतं, सत्यं, तदगत्याश्रितं; प्राणहारित्वगुणसाम्यात् प्रयोगान्यथासिद्धेः । 'यथा वै श्येनो निपत्यादत्त' इति हि श्रुतिः । मुख्यस्यैव हि शब्दस्य नामत्वप्रतीतिः स्वतःप्राप्ता, अत्र तु स्वतःप्राप्तस्य मुख्यत्वस्यापवादाभावान्न तत्प्रहाणं युक्तम्, अतोऽनेन वाक्येन नामवाच्यत्वं शब्दस्वारस्यादवगम्यते, एतदैकार्थ्या**न्नामरूपे व्याकरवाणी**त्यत्रापि ब्रह्मपर्यन्तं नामरूपव्याकरणमेव विवक्षितम् । किंच—न तावद्वर्णसृष्टिप्रतिपादनशङ्कापि भवितुमर्हति; **नाम**शब्दस्य वर्णमात्रपर्यायत्वाभावात् । ब्रह्मव्यतिरिक्तसमस्ततत्तत्पदार्थस्वरूपनिष्पादनस्य रूपव्याकरणोक्तिसिद्धत्वेन—गगनासाधारणरूपशब्दनिष्पादनस्यापि रूपव्याकरणोक्त्यैव सिद्धत्वात्—तत्प्रतिपादनवैयर्थ्यं च स्यात् । नच **रूप**शब्दस्य गोबलीवर्दन्यायेन सङ्कोचः; सङ्कोचकस्य नामव्याकरणनिर्देशस्यान्यथासिद्धत्वात् । अतोनिष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेव नामव्याकरणं स्यात्, तत्र **बहु स्या**मित्यनेन वक्ष्यमाणबहुत्वस्य ब्रह्मविशेषणत्वावगमात्, अस्मिन्वाक्येऽपि व्याकरणस्यानुप्रवेशपूर्वकत्वप्रतिपादनाच्च—व्याक्रियमाणरूपस्य ब्रह्मविशेषणत्वमवगम्यते, अतो ब्रह्मविशेषणरूपसमभिव्याहारात्—नाम्नोऽपि ब्रह्मविशेषणत्वमवगम्यते । नाम्नो विशेषणत्वं वाचकतयैवेत्युपपादितम् । कृत्स्नस्य रूपस्य ब्रह्मविशेषणत्वावगमात्, तद्रूपप्रवृत्तिनिमित्तकत्वाच्च—नाम्नां ब्रह्मविशेषणत्वं तस्य वाचकतयैवेत्यवगम्यते । वक्ष्यमाणबहुत्वविषयस्य **बहु**शब्दस्योपक्रमे ब्रह्मपर्यन्तत्वेन प्रयोगदर्शनात्—उपक्रमोक्तबहुत्वावान्तरभिदारूपतत्तद्रूपवाचिनां च नाम्नां ब्रह्मवाचकतया तद्विशेषणत्वमित्यवगम्यते । **तत्तेज ऐक्षत, ता आप ऐक्षन्ते**ति प्रकरणे तेजःप्रभृतिशब्दानां परमात्मविषयतया प्रयोगदर्शनाच्च—नाम्नां ब्रह्मविशेषणत्वं तद्वाचकतयेत्यवगम्यते । 'वचसां वाच्यमुत्तमं, हरिरखिलाभिरुदीर्यते तथैकः, नताः स्मः सर्ववचसां प्रतिष्ठा यत्र शाश्वती'त्यादिस्मृतिस्वारस्याच्च—नामवाच्यत्वमवगम्यते । ततश्च **नामरूपे व्याकरवाणी**ति श्रुतिः चिदचिद्विशिष्टस्य ब्रह्मणस्तन्नामवाच्यत्वमेव प्रतिपादयतीति सिद्धम् । **ऐतदात्म्य**शब्दार्थव्याख्यानं निगमयति—**अत इति** । शरीरवाचिशब्दानां शरीरिपर्यन्तत्वं निगमयति—**तस्मादिति** । तस्मादुदाहृतवाक्यैः शरीरशरीरिभावप्रतिपादनात्, तस्य तत्तन्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः । ननु—न तत्पर्यन्ताभिधानमुपपद्यते; लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नतया व्युत्पत्तिभङ्गप्रसङ्गात्, ब्रह्मण एकत्वेन द्वित्वबहुत्वानुपपत्तेश्चेत्यत्राह—**अतः सर्वशब्दानामिति । लोकव्युत्पत्ति**शब्दस्यायं भावः—नात्र व्युत्पत्तिविरोधः; व्युत्पन्नार्थापरित्यागात् । ब्रह्मणो लौकिकप्रमाणागोचरतया—तत्पर्यन्तव्युत्पत्त्यभावः, न त्ववाचकतयेति सोऽन्यथासिद्धः । यथा—लिङादेरपूर्ववाचित्वं वेदव्युत्पत्त्याऽवगम्य लोकतो व्युत्पत्त्यभावपरिहारः कार्यवाक्यार्थवादिभिरुच्यते—तद्वत् तत्पदार्थविशिष्टशब्देन ब्रह्मणोऽपि द्वित्वबहुत्वादिकं सद्वारकमुपपन्नमित्युक्तं भवति । **तत्त्वमसी**त्यस्योपसंहारवाक्यत्वमाह—**इत्यैतदात्म्यमिति** । सामानाधिकरण्येन विशेष उपसंहार इति वैयधिकरण्येन प्रतिज्ञा-

७।१।३ )। 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' ( छा. ७।२६।२ ) इत्याद्याः। तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते। तन्निवृत्तिस्तु साध्यापि प्रध्वंसाभावरूपा न विनश्यति। 'ब्रह्म वेद ब्रह्मैव भवति' ( मु. ३।२।९ ), 'तमेव विदित्वाति मृत्युमेति' ( श्वे. ३।८ ) इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयन्नियोगव्यवधानं प्रतिरुणद्धि। न च—विदिक्रियाकर्मत्वेन वा, ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः; उभयविधकर्मत्वप्रतिषेधात्— 'अन्यदेव तद्विदितादथो अविदितादधि ।' ( के. १।१।३ ) 'येनेदं सर्वं विजानाति तत्केन विजानीयात्' ( बृ. २।४।१४ ) इति, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।' (के. १।१।४) इति च। न चैतावता शास्त्रस्य निर्विषयत्वम्; अविद्यापरिकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। न हीदंतया ब्रह्म विषयीकरोति शास्त्रम्, अपि त्वविषयं प्रत्यगात्मस्वरूपं प्रतिपादयदविद्याकल्पितं ज्ञातृज्ञेयविभागं निवर्तयति। तथा च शास्त्रं—'न दृष्टेर्द्रष्टारं पश्येः, न मतेः' ( बृ. ३।४।२ ) इत्येवमादि। नच—ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्; स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम्। नच—ज्ञानमात्राद्बन्धनिवृत्तिर्न दृष्टेति वाच्यम्; बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः। अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम्। न हि मिथ्यारूपसर्पनिवृत्ती रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते। यदि शरीरसंबन्धः पारमार्थिकस्तर्हि तद्विनाशापेक्षा, स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः। यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव नजातमित्यवगम्यते; ज्ञानकार्यादर्शनात्। तस्माच्छरीरस्थितिर्भवतु वा, मा वा, वाक्यार्थज्ञानसमन-

---

प्रतिबन्धनिवृत्तेः साध्यत्वं निगमयति—**तस्मादिति**। प्रतिबन्धनिवृत्तेः साध्यत्वेनानित्यत्वं स्यादित्यत्राह—**निवृत्तिस्त्विति**। अयं परिहारो नियोगसाध्यत्वपक्षेऽपि तुल्य इति—चेन्न; **नियोगसाध्यत्वे प्रपञ्चसत्यत्वं स्यादित्यभिप्रेत**मित्युक्तत्वात्। नियोगसाध्यत्वपक्षे श्रुतिस्वारस्यहानिमाह—**ब्रह्मेति**। श्रुतिस्वारस्यमेव विलम्बं न सहत इति भावः। कथं नियोगव्यवधानप्रतिरोधः, विधिशेषतया हि ब्रह्मणः सिद्धिः, तत्सिद्ध्यर्थं नियोगः स्वीकार्य इति शङ्कायां—नियोगविशेषत्वं विदिकर्मत्वेन, ध्यानकर्मत्वेन चोभयथापि न संभवतीत्याह—**न च विदीति**। **वेदनं** ज्ञानम्। **उपासनं** ज्ञानविशेषः। अत्र **वेदन**शब्दो निष्प्रपञ्चीकरणज्ञानविशेषे विश्राम्यति; विवक्षावशात्, अतो निष्प्रपञ्चीकरणनियोगवादस्यापि दूषणं फलितम्। विद्युपासिकर्मत्वाभावे श्रुतिमाह—**अन्यदिति**। **विदितात्** ज्ञेयात्। **अविदितात्** ज्ञातुरित्यर्थः। **अन्यदेवेति**। विदिकर्मत्वनिषेधः। **तदेवेति** ध्यानकर्मत्वनिषेधः ॥

विदिकर्मत्वाभावे शास्त्रवेद्यत्वासिद्ध्या शास्त्रस्य निर्विषयत्वमाशङ्क्य परिहरति—**न चेति**। **ब्रह्म वेद, ब्रह्मविदि**त्यादिभिर्ब्रह्मणो वेद्यत्वं प्रतीयत इत्यत्राह—**न हीदंतयेति**। **इदंतया** प्रमेयतया। **अपि त्विति**। प्रत्यगात्मस्वरूपं निर्विशेषमविषयतया प्रतिपादयतीत्यर्थः। शास्त्रस्य भेदनिवृत्तिपरत्वं दर्शयति—**तथाचेति**। ज्ञानादेव बन्धनिवृत्तिश्चेत्, शास्त्रप्रत्यक्षविरोधः स्यादित्याशङ्क्य शास्त्रविरोधं तावत्परिहरति—**नच ज्ञानादिति**। **श्रवणादिविध्यानर्थक्यमिति**। श्रवणमननयोरपि विधेयत्वं पूर्वपक्षिणोक्तमिति न विरोधः। कुत इत्यत्राह—**स्वभावेति**। **स्वभावप्रवृत्त**शब्देनानादिप्रवृत्तत्वं विवक्षितम्। अथ प्रत्यक्षविरोधं परिहरति—**न च ज्ञानमात्रादिति**। कथमित्यत्राह—**बन्धस्येति**। कथं स्थित्यनुपपत्तिः; बन्धो ह्यनुवर्तत इति शङ्का **यस्य तु बन्ध** इत्यादिना परिहरिष्यते। उक्तादेव हेतोः शरीरपातानपेक्षत्वमाह—**अत एवेति**। दृष्टान्तेनोपपादयति—**न हीति**। दृष्टान्ते दर्शितमर्थं व्यतिरेकमुखेन दार्ष्टान्तिके विवृणोति—**यदीति**। पारमार्थिकत्वविपर्ययमाह—**स त्विति**। विप्रतिपन्नमपारमार्थिकं; ब्रह्मव्यतिरिक्तत्वात्—शुक्तिरूप्यवदिति भावः। ज्ञानोत्तरकालस्थितिरनुपपन्ना चेत्कथं बन्धस्यानुवृत्तिरित्यत्राह—**यस्य त्विति**। यस्य त्वनिवृत्तोऽनिवृत्त इति प्रतीतिः तस्य ज्ञानमेव न जातं; तत्कार्यादर्शनादिति—कार्याभावस्य कारणाभावमात्रव्याप्यत्वाभावेऽपि सामग्र्यभावव्याप्यत्वाद्भ्रमनिवृत्तिं प्रति तत्त्वज्ञानस्य सामग्रीत्वात्तदभावेन ज्ञानाभावः कल्प्यत इति—न प्रत्यक्षविरोध इत्यर्थः। ज्ञानोत्पत्त्यनन्तरं बन्धनिवृत्तिं निगमयति—**तस्मादिति**। **शरीरस्थितिर्भवतु वा, मा वेति**। दग्धपटे पटप्रतिभ-

---

१ नहीदंतया इत्यादिः अथ प्रत्यक्षविरोधं परिहरति इत्यन्तः पाठो का. मु. पु. न दृश्यते।

न्तरं मुक्त एवासौ । अतो न ध्याननियोगसाध्यो मोक्ष इति—न ध्यानविधिशेषतया ब्रह्मणः सिद्धिः, अपि तु **'सत्यं ज्ञानमनन्तं ब्रह्म'** ( तै. २।१।१ ), **'तत्त्वमसि'** ( छा. ६।८।७ ), **'अयमात्मा ब्रह्म'** ( बृ. २।५।१९ ) इति तत्परेणैव पदसमुदायेन सिध्यतीति, तदयुक्तं; वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यनुपपत्तेः । यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथापि बन्धस्यापरोक्षत्वात्—न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते; रज्ज्वादावपरोक्षसर्पप्रतीतौ विद्यमानायां 'नायं सर्पो रज्जुरेषे'त्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात् । आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन । तथा हि—रज्जुसर्पदर्शनभयात्पराावृत्तः पुरुषो 'नायं सर्पो रज्जुरेषे'त्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तस्तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते । नच—शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्; तस्यानिन्द्रियत्वात् । ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्षसाधनानि । नच—अस्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति; निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात् ।

---

वत् शरीरप्रतिभासोऽनुवर्तेत वा, निवर्तेत वेत्यर्थः । **मुक्त एवासाविति** । बन्धस्य च्छिन्नमूलतया दग्धपटवदकार्यकर इति भावः । बन्धनिवृत्तेर्नियोगनैरपेक्ष्यसाधकहेतुभिर्विधिशेषतया न ब्रह्मणः सिद्धिरित्यत्राह—**अत इति** । **अतः** वाक्यार्थज्ञानमात्रसाध्यत्वात् । तर्हि ब्रह्मणः कथं सिद्धिरित्यत्राह—**अपि त्विति** । **तत्परेणैवेति** भेदनिषेधपरैर्वाक्यैर्निर्विशेषतया सिध्यतीत्यर्थः । यद्वा, सिद्धरूपार्थपरेणैवेत्यर्थः । **सिध्यतीति** । ब्रह्मेत्यर्थलब्धम् । **इति ध्याननियोगवादिन उपरि शंकरेण दूषणाभिधानम् ॥**

एतद्ध्याननियोगवादी दूषयति—**तदयुक्तमित्यादिना** । कुत इत्यत्राह—**वाक्यार्थेति** । प्रपञ्चमिथ्यात्ववादिना ज्ञानाद्बन्धनिवृत्त्यनुपपत्तिः कथमुच्यत इत्यत्राह—**यद्यपीति** । ज्ञाननिवर्त्यत्वोपगमेऽपि वैषम्यमाह—**तथापीति** । परोक्षज्ञानस्यापरोक्षभ्रमाबाधकत्वे दृष्टान्तमाह—**रज्ज्वादाविति** । **आदि**शब्देन भूदलनादि गृह्यते । **सर्पविपरीतज्ञानं** रज्जुज्ञानम् । तेन भयानिवृत्तिश्चेदाप्तोपदेशानर्थक्यं स्यादित्यत आह—**आप्तोपदेशस्येति** । अनेन प्रथमसूत्रे **प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तत** इति भाष्यार्थो ज्ञायते । आप्तोपदेशस्य भयादिकार्यनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्ष्यस्य निमित्तप्रवृत्तिद्वारकमिति हि तस्य भाष्यस्यार्थः । इममर्थं दृष्टान्तेन दर्शयति—**तथा हीति** । अस्त्वपरोक्षज्ञानमेव तादृशभ्रमविरोधि, शब्द एवापरोक्षज्ञानं जनयतीत्याशङ्क्याह—**न चेति** । हेतुमाह—**तस्येति** । व्याप्तिं दर्शयति—**ज्ञानेति** । नच—अनिन्द्रियत्वेऽप्यालोकादेरपरोक्षज्ञानजनकत्वं दृष्टमिति—हेतोर्व्यभिचारः; इन्द्रियप्रधानकसामग्र्यननुप्रविष्टत्वस्य विवक्षितत्वात् । एतच्च **ज्ञानसामग्री**ष्वित्यनेन सूचितम् । **ज्ञानसामग्रीषु** सपरिकरास्विन्द्रियलिङ्गशब्दसदृशानुपपत्त्यनुपलब्धिष्वित्यर्थः । इन्द्रियाण्येवेति, । आलोकादिसहकृतानीति शेषः । इन्द्रियमेव योगिनो व्यवहितादिकं ज्ञापयति, तथा विवक्षितपुरुषविशेषस्य वाक्यमपरोक्षज्ञानं जनयतीत्याशङ्क्य परिहरति—**न चेति** । **अस्य** पुरुषस्य । हेतुमाह—**निवृत्तेति** । **अनभिसंहिते**त्यादि पदद्वयं हृदि निधाय विशेषणद्वयमाह—**निवृत्तप्रतिबन्धे तत्परेऽपीति** । **स्वविषयनियमातिक्रमादर्शनेने**त्यत्र **विषय**शब्दः साध्यपरः—स्वसाध्यज्ञानानतिक्रमदर्शनेनेत्यर्थः । शब्दसाध्यं ज्ञानं परोक्षमेव, शब्दस्तु स्वसाध्यं परोक्षज्ञानं नातिक्रामतीति यावद् । मनसः परोक्षापरोक्षज्ञानसाधारणहेतुत्वात्, शब्दस्य तु लिङ्गस्येव परोक्षज्ञानमात्रहेतुत्वात्—न योगिमनसः साम्यमिति भावः । ननु—शब्देनाप्यपरोक्षज्ञानं जायते; 'दशमस्त्वमसी'ति वाक्येन 'दशमोऽह'मित्यपरोक्षज्ञानोत्पत्तिदर्शनादिति, तन्न; उपदेशानन्तरं शीघ्रभाविप्रत्यक्षसामग्रीजन्येन ज्ञानेन पूर्वज्ञानस्य भेदाग्रहेण प्रत्यक्षत्वारोपात् । तदा ह्युपदेशात्पूर्वभाविनवकपरिसङ्ख्यानजनितसंस्कारवशेनाविलम्बिता ह्यपेक्षाबुद्धिर्जायते, यथा—'घटोऽय'मित्युक्ते घटं पश्यतोऽपरोक्षप्रतीतिरिन्द्रियजन्या, न तु 'घटोऽय'मिति वाक्यजन्या, वाक्यं त्वपरोक्ष्यनिमित्तचक्षुर्व्यापारहेतुः, तथा—'दशमस्त्वमसी'ति वाक्यं 'दशमोऽह'मिति बुद्धिनिमित्तस्य पूर्वावसितापेक्षणीयवस्तुप्रतिसन्धानस्य हेतुः, न त्वपरोक्षावभासहेतुः; तत्तत्प्रतीतिसामग्रीव्यवहितस्य वाक्यस्य तत्तत्सामग्रीत्वाभावात् । विमतं प्रत्यक्षज्ञानं न वाक्यजन्यं; प्रत्यक्षज्ञानत्वात्—अनुपदिष्टवाक्यस्य 'दशमोऽह'मिति प्रत्ययवत् । विमतं वाक्यं न प्रत्यक्षज्ञानजनकं वाक्यत्वात्—संप्रतिपन्नवदिति । एवं सामग्रीशैथ्र्येणान्यथासिद्ध्या परिहारो **वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेने**ति भाष्येणाभिप्रेतः । नच—वाक्यजन्येऽपि ज्ञाने विशेष्यभूताहमर्थे प्रत्यक्षतामात्रेण विशिष्टा-

नच ध्यानस्य वाक्यार्थज्ञानोपायता; इतरेतराश्रयत्वात्—वाक्यार्थज्ञाने जाते तद्विषयध्यानं, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति। न च ध्यान-वाक्यार्थज्ञानयोर्भिन्नविषयत्वम्; तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात्। न ह्यन्यध्यानमन्यज्ञानौन्मुख्यमुत्पादयति। ज्ञातार्थस्मृतिसंततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयं; ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासंभवात्। नच—ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं, निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति—युक्तम्; ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानेनैकविषयं, भिन्नविषयं वा। एकविषयत्वे—तदेवेतरेतराश्रयत्वम्। भिन्नविषयत्वे—ध्यानेन तदौन्मुख्यापादनासंभवः। किंचि—ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वात्—निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति—वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव। यतो वाक्यादापरोक्ष्यज्ञानासंभवाद्वाक्यार्थज्ञानेनाविद्या न निवर्तते; तत एव जीवन्मुक्तिरपि दूरोत्सारिता। का चेयं जीवन्मुक्तिः, सशरीरस्यैव मोक्ष इति चेत्, 'माता मे वन्ध्ये'तिवदसंगतार्थं वचः; यतः सशरीरत्वं बन्धोऽशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम्। अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययस्तस्य सशरीरत्वनिवृत्तिरिति, न; मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत्कथं सशरीरस्य मुक्तिः, अजीवतोपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति—कोऽयं जीवन्मुक्तिरिति विशेषः। अथ सशरीरत्व-

---

नुप्रविष्टविशेषणांशस्यापि प्रत्यक्षतेति वाच्यम्, अहंसमानाधिकृतशब्दोल्लिखितप्रतीतेरपरोक्षत्वनियमश्च नास्ति; सुखदुःखाद्यनुमितपुण्यपापस्य पुरुषस्य 'पुण्यकृदहं पापकृदह'मित्यादिप्रतीतेः—पुण्यपापयोरापरोक्ष्यादर्शनात्। धर्मिप्रत्यक्षतामात्रेण धर्मप्रत्यक्षत्वे—लैङ्गिके 'पर्वतोऽग्निमा'निति ज्ञाने अग्नेरपि प्रत्यक्षत्वप्रसङ्गः। तदेतदखिलं **स्वविषयनियमातिक्रमादर्शनेन तदयोगा**दित्यत्राभिप्रेतम्॥

एवं शब्दस्यापरोक्षज्ञानहेतुत्वं दूषितम्, अथ ध्यानस्य वाक्यार्थज्ञानोपायतामन्योन्याश्रयणेन दूषयति—**न चेत्यादिना।** अन्योन्याश्रयणपरिहाराय ध्यानपूर्वभाविज्ञानमर्थान्तरविषयं, पाश्चात्यज्ञानमर्थान्तरविषयमिति भिन्नविषयताश्रयणमयुक्तमित्याह—**न च ध्यानेति।** कुत इत्यत्राह—**तथा सतीति।** कथमुपायत्वहानिरित्यत्राह—**न ह्यन्यध्यानमिति।** एकविषयत्वेऽपि निवर्तकस्य वाक्यार्थज्ञानस्य ध्यानापेक्षा स्यात्, ध्यानस्य वाक्यार्थज्ञानापेक्षा कथमित्यत्राह—**ज्ञातार्थेति।** ध्यानहेतुभूतं ज्ञानं हेत्वन्तरजन्यं, नतु ध्यानं पश्चाद्भाविवाक्यजन्यज्ञानमूलम्—इत्येवं ध्यानवाक्यार्थज्ञानयोः सामग्रीभेदेनान्योन्याश्रयणपरिहारमाशङ्क्य सामग्रीभेदो न संभवतीत्याह—**ध्येयेति। हेत्वन्तरासंभवात्** ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादिति भावः। तत्परिहाराय वाक्यभेदमाशङ्क्य तथा वक्तुमयुक्तमित्याह—**न चेति।** विकल्प्य दूषयति—**ध्यानमूलमिति। एकविषयत्वे तदेवेतरेतराश्रयत्वमिति।** वाक्यान्तरेण ज्ञानोत्पत्तौ तस्य तत्त्वमस्यादिवाक्यजन्यज्ञानतुल्यविषयत्वात्—तस्यापि ज्ञानस्य निदिध्यासनापेक्षा स्यात्, ध्यानस्य च वाक्यार्थज्ञानापेक्षा स्यादित्यन्योन्याश्रयत्वमित्यर्थः। वाक्ययोर्भिन्नविषयत्वे दूषणमाह—**भिन्नेति।** ध्यानस्य च वाक्यार्थज्ञानविरोधित्वमेवेत्याह—**किंचेति। ध्यात्रादीत्यादि**शब्देन शमादिर्गृह्यते। **दृष्टद्वारेणेति।** अदृष्टद्वारेणोपयोगस्त्वत्यन्तभीरुभिः परैर्निरसनीयद्वैतवासनायाः सत्यत्वप्रसङ्गभयात्परित्यक्त इति ध्याननियोगवादिनोऽभिप्रायः। वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिनिरासेन जीवन्मुक्तिनिरासः सिध्यतीत्याह—**यत इति। दूरोत्सारिता** वाक्यादपरोक्षज्ञानसंभवेऽपि व्याघातादिना जीवन्मुक्तिरुत्सारिता, वाक्यादापरोक्ष्यासंभवाद्दूरोत्सारितेति भावः॥ **का चेयमिति।** किंशब्दः क्षेपे, विकल्पाभिप्रायेण प्रश्नपरो वा। तत्स्वरूपं शङ्कते—**सशरीरस्येति।** व्याहतिमाह—**मातेति।** व्याहतिमुपपादयति—**यत इति।** व्याहतिपरिहारार्थं तन्मतं शङ्कते—**अथेति। सशरीरत्वनिवृत्ति**रिति निर्देशेन सशरीरत्वस्य छिन्नमूलता जीवन्मुक्तिवादिनाऽभिप्रेता। दूषयति—**नेति।** शरीरस्य सत्यत्वानभ्युपगमात् तस्य प्रध्वंसरूपा स्वरूपनिवृत्तिरनभिमता, अतः प्रतिभासनिवृत्तिर्वा, प्रतिभासतात्त्विकताभिमाननिवृत्तिर्वा विवक्षिता स्यादित्यभिप्रायेण प्रथमकल्पमनूद्याभिमतासिद्ध्या दूषयति—**मिथ्येतीति। सशरीरत्वं** सशरीरत्वप्रतिभासः; अनन्तरग्रन्थे प्रतिभासनिर्देशात्। **कथं सशरीरस्य मुक्तिरिति।** सशरीरस्य मुक्तिरुक्ता भवतीत्यर्थः। तदेवोपपादयति—**अजीवतोऽपीति। मिथ्याप्रतिभास**शब्देन भ्रान्तिज्ञानं विवक्षितम्। जीवदजीवन्मुक्तयोर्विशेषाभावान्न सशरीरस्य मुक्तिरुक्ता स्यादित्यर्थः। द्वितीयं शिरः शङ्कते—**अथेति।** अत्र पूर्वं सशरी-

प्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते स जीवन्मुक्त इति—चेन्न; ब्रह्मव्यतिरिक्तसकलवस्तुविषयत्वाद्बाधकज्ञानस्य । कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति—बाधितानुवृत्तिर्न शक्यते वक्तुम्, द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात्—द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता । किंच—**'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये'** ( छा. ६।१४।२ ) इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति । सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता—**'वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम्'** ( आ. ध. सू. २।९।२१।१३-१७ ) इति । अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः । अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति । तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । नच—नियोगसाध्यत्वेन मोक्षस्यानित्यत्वप्रसक्तिः; प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किंच—न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते, किंतु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्षज्ञानेन । नियोगस्तु तदपरोक्षं ज्ञानं जनयति । कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत्, कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् । मनोनैर्मल्यद्वारेणेति चेत्, ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते, तव तु नियोगेन मनसि निर्मले

---

त्वप्रतिभासे **वर्तमान** इत्यादिग्रन्थाभिप्रेतार्थो विवृतो भवति । दूषयति—**नेति** । कथमित्यत्राह—**ब्रह्मेति** । **अविद्याकर्मादी**त्यादिशब्देन वासना गृह्यते । **तेनैव बाधितः** बाधकज्ञानेन बाधित इत्यर्थः । द्विचन्द्रज्ञानादौ हि बाधितानुवृत्तिर्दृष्टेत्यत्राह—**द्विचन्द्रज्ञानादाविति** । न हि रज्जुयाथात्म्यज्ञानेन शुक्तौ रजतभ्रमो निवर्तत इति भावः । प्रथमसूत्रे बाधितानुवृत्तिनिराकरणे दोषस्य पारमार्थिकत्वेन—ज्ञानबाध्यत्वाभावात्—भ्रमानुवृत्तिरुक्ता, अत्रतु चन्द्रैकत्वज्ञानाविषयत्वेन—दोषस्याबाधितत्वात्—द्वित्वज्ञानानुवृत्तिरुक्तेति भिदा । जरन्मायावादिनोऽपि कृत्स्नमिथ्यात्वस्याभ्युपगतत्वादेवं वैषम्यमुक्तम् । जीवन्मुक्तेः श्रुतिविरोधमाह—**किंचेति** । स्मृतिविरोधमाह—**सैषेति** । **वेद**शब्देन त्रिवर्गसाधनकर्माण्युच्यन्ते । तत्फलमुच्यते—**इमं लोकममुं चेति** । **बुद्धे** वाक्यार्थज्ञाने जाते सति, **क्षेमप्रापणं** मोक्षः, **तच्छास्त्रैर्विप्रतिषिद्धम्** । शास्त्रैरिति बहुवचनस्यायं भावः—वाक्यार्थज्ञानोत्तरभाव्युपासनविधिपरैः, 'एवं वर्तयन् यावदायुष'मित्याप्रयाणादनुवृत्तिपरैः, मोक्षस्य शरीरपातमात्रसापेक्षत्वपरैः, 'तयोर्ध्वमायन्नमृतत्वमेती'ति नाडीविशेषनिष्क्रमणपरैः, अर्चिरादिमार्गेण देशविशेषप्राप्तिपरैश्चानेकैः शास्त्रैर्विरोध इति । **विप्रतिषिद्धमिति** । विशेषेण प्रतिषिद्धम् । न तुल्यबलैः प्रतिरुद्धम्, अपितु प्रबलैः पराहतम्, प्राबल्यं च **'भूयसां स्यात् बलीयस्त्व'**मिति न्यायादिति भावः । प्रत्यक्षविरोधमपि स्मृतिरेवाह—**बुद्धे चेदिति** । **एतेन परं व्याख्यातम्—एतेन** शास्त्रप्रत्यक्षविरोधेन, औडुलोमिमतानुसारेणोक्तमन्यदपि व्याख्यातं, सर्वमप्यपास्तमित्यर्थः । यद्वा, यथा—इदानीं दुःखोपलब्धिः, तथा—प्रेत्यापीत्यर्थः । यद्वा, यथा—दुःखनिवृत्तिर्नोपलभ्यते, तथा—सुखनिवृत्तिरपि नेत्यर्थः । जीवन्मुक्तिनिरासार्थमुदाहृतेन वचनेन वाक्यार्थज्ञानमात्रान्मोक्षश्चार्थान्निरस्त इत्याह—**अनेनेति** । जीवन्मुक्तिनिरासमुपसंहरति—**अत इति** । जीवन्मुक्तिनिरासेन स्वमतस्थैर्यसिद्धिमाह—**तस्मादिति** । वाक्यार्थज्ञानमात्रान्मोक्षवादिनोक्तचोद्यपरिहारो ममापि तुल्य इत्याह—**न च नियोगेति** । नियोगनिवर्त्यत्वे प्रपञ्चस्य सत्यत्वं स्यादित्याशङ्क्याह—**किंचेति** । ध्याननियोगपक्षानुपपत्तिपरिहारस्य विवक्षितत्वात्—**किंच**शब्दप्रयोगः । नियोगस्य निवर्तकत्वं ज्ञानद्वारकमिति—न निवर्त्यसत्यत्वमित्यर्थः ॥

नियोगस्य ज्ञानोत्पत्तौ किंचित्कारबुभुत्सया पृच्छति—**कथमिति** । न खलु ज्ञाने दृष्टः किंचित्कारो नियोगेन संभवति, अतः स वक्तव्य इति भावः । प्रतिबन्द्या परिहरति—**कथं वेति** । **वेदनोत्पत्तिहेतुत्व**मितीच्छाद्वारा वेदनोत्पत्तिहेतुत्वमभिप्रेतं; **विविदिषन्तीति** ह्युदाहरिष्यते । परिहारं शङ्कते—**मन इति** । तत्साम्यमाह—**ममापीति** । पुनराशङ्कते—**मम त्विति** । मनो हि साधारणकारणं, तस्मिन्सत्यसाधारणकारणमपेक्षितं तन्ममास्ति, त्वया तु वक्तव्यमिति चेदित्यर्थः । वैशेषिकाद्यभिमतमानसप्रत्यक्ष इव, प्रकृष्टादृष्टसहकृतमनोमात्रकारणके 'तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यसी'त्यादिसिद्धे योगिप्रत्यक्ष इव च

---

१ °ज्ञानविषयीभूत° । २ विशेषेण इत्यादिः प्राबल्यम् इत्यन्तः पाठः का. मु. पु. न दृश्यते ।

ज्ञानसामग्री वक्तव्येति चेत्, ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः । केनावगम्यत इति चेत्, भवतो वा कर्मभिर्मनो निर्मलं भवति निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयतीति केनावगम्यते । **विविदिषन्ति यज्ञेन दानेन तपसानाशकेन'** ( बृ. ४।४।२२ ), **'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'** ( बृ. २।४।५ ), **'ब्रह्म वेद ब्रह्मैव भवति'** ( मु. ३।२।९ ) इत्यादिभिः शास्त्रैरिति चेत्, ममापि **'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'**( बृ. २।४।५ ), **'ब्रह्मविदाप्नोति परम्'** ( तै. २।१।१ ), **'न चक्षुषा गृह्यते नापि वाचा'** ( मु. ३।१।८ ), **'मनसा तु विशुद्धेन । हृदा मनीषा मनसाभिक्लृप्तः'** ( का. ६।९) इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति, निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम् । **'नेदं यदिदमुपासते'** (के. ४ ) इत्युपास्यत्वं प्रतिषिद्धमिति चेत्, मैवं नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते, अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते । यदिदं जगदुपासते प्राणिनो नेदं ब्रह्म, तदेव ब्रह्म त्वं विद्धि यद्वाचानभ्युदितं येन वागभ्युद्यत इति वाक्यार्थः । अन्यथा **'तदेव ब्रह्म त्वं विद्धि'**( के. ४ ) इति विरुध्यते, ध्यानविधिवैयर्थ्यं च स्यात् । अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः । यदपि कैश्चिदुक्तं—भेदाभेदयोर्विरोधो न विद्यत इति, तदयुक्तं; न हि शीतोष्णतमःप्रकाशादिवद्भेदाभेदावेकस्मिन्वस्तुनि संगच्छेते । अथोच्येत—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यं, सर्वं च भिन्नाभिन्नं प्रतीयते, कारणात्मना जात्यात्मना चाभिन्नं, कार्यात्मना व्यक्त्यात्मना च भिन्नम् । छायातपादिषु विरोधः सहान-

---

मन एवासाधारणकारणमिति परिहरति—**ध्यानेति** । मनोमात्रस्य साधारणकारणत्वेऽपि निर्मलतरस्य मनोविशेषस्यासाधारणकारणत्वं युक्तमिति भावः । तज्ज्ञापकं प्रश्नं शङ्कते—**केनेति** । ज्ञापकस्वारस्यलक्षणं स्वपक्षे वैषम्यं दर्शयितुं पृच्छति—**भवतो वेति** । निदिध्यासनेन विषयविमुखीकृतमनस्कस्य शास्त्रेण निवर्तकज्ञानोत्पत्तौ प्रमाणतया पराभिमतानि श्रुतिवाक्यानि शङ्कते—**विविदिषन्तीति** । **ब्रह्म वेद ब्रह्मैव भवतीति वेदन**शब्देन वाक्यार्थज्ञानं विवक्षितमिति पराभिप्रायः । मनसो ज्ञानसाधनत्वे प्रमाणं दर्शयति—**ममापीति** । **न चक्षुषे**त्यादिवाक्यं मनस एव साधनत्वे स्वरसं, **ब्रह्म वेदे**त्यत्र **वेदन**शब्दस्य वाक्यार्थज्ञानपरत्वं तु न स्वरसतः प्रतीयते । नच श्रुत्यन्तरैकार्थ्येन तत्परत्वेऽवगमः; वाक्यार्थज्ञानस्योपायत्वकण्ठोक्तिमच्छ्रुत्यन्तराभावादित्यभिप्रेतम् । मिथ्यात्वनिबन्धनाः सर्वे चोद्यपरिहाराः समानाः, परोक्षज्ञानस्याप्यपरोक्षभ्रमनिवर्तकत्वं शास्त्रप्रत्यक्षविरोधौ श्रुतिस्वारस्यहानिश्च भवतां पक्षेऽधिकं दूषणमिति वैषम्यज्ञापनाय **कथ**मित्यादिना प्रतिबन्दीमुखेन तत्तच्छङ्कापरिहारः कृतः । **इति**शब्दो नानन्तरवाक्यशेषः, अपि तु प्रकरणशेषः ॥

उपास्यत्वप्रतिषेधं शङ्कते—**नेदमिति** । परिहरति—**नैवमिति** । तस्य वाक्यस्यैवं निर्वाहो न युक्त इत्यर्थः । उपास्यत्वनिषेधः प्रतीयत इत्याह—**नात्रेति** । कस्तर्ह्यर्थ इत्यत्राह—**अपि त्विति** । कथं वैरूप्यप्रतिपादनमित्यत्राह—**यदिदमिति** । **यदिदमुपासत** इत्यत्रेदमंशे निषेधस्य तात्पर्यमिति भावः । **मनो ब्रह्मेत्युपासीते**त्यादिना विहितप्रतीकोपासनोपास्यानिहि परिच्छिन्नानि, नेदं ब्रह्म, किं त्वपरिच्छिन्नं तदेव परं ब्रह्मेत्यर्थः । अनेन **अन्यदेव तद्विदिता**दित्यादिकमपि जगद्वैरूप्यपरमिति व्याख्यातं भवति । **यद्वाचानभ्युदितं** वक्तुमशक्यम्—अपरिच्छिन्नम् । **अन्यथेति** स्ववाक्यविरोध उक्तः । **ध्यानविधिवैयर्थ्य**मिति वाक्यान्तरविरोध उक्तः । स्वपक्षमुपसंहरति—**अत इति** ॥ **इति ध्याननियोगवादिना शंकराभिहितस्वमतदूषणपरिहारः, जीवन्मुक्तिनिरासश्च ॥**

अथायमेव ध्याननियोगवादी भास्करमतं दूषयितुं तदभिमतं भेदाभेदविरोधमनुवदति—**यदपीत्यादिना** । प्रथमं संक्षेपेण दूषयति—**तदयुक्तमिति** । नियमेन भिन्नाधारत्वलक्षणः, सहानवस्थानलक्षणश्चेति विरोधो द्विधा । **आदि**शब्देन तृणदहनादेरिव नाश्यनाशकभावो विवक्षितः । तद्वद्भेदाभेदयोरपि विरोधोऽस्तीत्याह—**न हीति** । अथ भेदाभेदमतं विस्तरेण प्रस्तौति—**अथोच्येतेति** । वक्ष्यमाणौपयिकमर्थं शिक्षयति—**सर्वं हीति** । शीतोष्णादिष्वपि विरोधः प्रतीत्यधीन इति भावः । ततः किमित्यत्राह—**सर्वं चेति** । कथं भिन्नाभिन्नत्वमित्यत्राह—**कारणात्मनेति** । पूर्वोक्तद्विवि-

वस्थानलक्षणो भिन्नाधारत्वरूपश्च, कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते, प्रत्युतैकमेव वस्तु द्विरूपं प्रतीयते, यथा—मृदयं घटः, खण्डो गौः, मुण्डोगौरिति । न चैकरूपं किंचिदपि वस्तु लोके दृष्टचरम् । न च तृणादेर्ज्वलनादिवदभेदो भेदोपमर्दी दृश्यत इति—न वस्तुविरोधः; मृत्सुवर्णगवाश्वाद्यात्मनावस्थितस्यैव घटमुकुटखण्डवडवाद्यात्मना चावस्थानात् । न चाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदो भेदश्चैक एवाकार इतीश्वराज्ञा । प्रतीतत्वादैकरूप्यं चेत्, प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम् । न हि विस्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेष्वियं मृदयं च घटः, इदं गोत्वमियं च व्यक्तिरिति विवेक्तुं शक्नोति, अपि तु मृदयं घटः, खण्डो गौरित्येव प्रत्येति । अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीति चेत्, नैवम्; विविक्ताकारानुपलब्धेः । नहि सुसूक्ष्ममपि निरीक्षमाणैरिदमनुवर्तमानमिदं च व्यावर्तमानमिति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते । यथा—संप्रतिपन्नैक्ये कार्यविशेषे चैकत्वबुद्धिरुपजायते, तथैव—सकारणे ससामान्ये चैकत्वबुद्धिरविशिष्टोपजायते । एवमेव देशतः कालतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु 'तदेवेद'मिति प्रत्यभिज्ञा जायते । अतो द्व्यात्मकमेव वस्तु प्रतीयत इति—कार्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् । अथोच्येत—मृदयं घटः खण्डो गौरितिवद् 'देवोऽहं मनुष्योऽह'मिति सामानाधिकरण्येनैक्यप्रतीतेः—आत्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्, अत इदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायत—इति । तदिदमनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम् । तथा हि—अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति । देवाद्यात्माभिधानस्त्वात्मयाथात्म्यगोचरैः सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं

---

धविरोधोपलम्भस्थलवैरूप्यं वक्तुमाह—**छायेति** । ततः किमित्यत्राह—**कार्येति** । अविरोधेनोपलब्धिमाह—**प्रत्युतेति** । उपलब्धिमभिनयेन दर्शयति—**यथेति** । अद्विरूपवस्त्वनुपलब्धिमाह—**न चेति** । नाश्यनाशकत्वलक्षणस्तृतीयविरोधो नास्तीत्याह—**न च तृणादेरिति** । **वस्तुविरोध**शब्देन नाश्यनाशकत्वलक्षणविरोधो विवक्षितः । तादृशविरोधाभावमुपपादयति—**मृत्सुवर्णेति** । जातिगतोऽभेदो व्यक्तिगतश्च भेद इति—कथमेकस्य भेदाभेदाविति शङ्कायां जातिव्यक्त्योः परस्परभेदाभेदावुपपादयति—**न चाभिन्नस्येति** । **अभिन्नस्य** जातेः । **भिन्नस्य** व्यक्तेरित्यर्थः । जातेरभेद एवाकारः, व्यक्तेर्भेद एवाकार इति किमीश्वराज्ञया स्वीक्रियते, नहि प्रमाणतर्कानादरेण हठात्कश्चिदर्थः स्वीकार्यः—इति भावः । प्रतीतिबलादभ्युपगमं शङ्कते—**प्रतीतत्वादिति** । तथा सत्यमतस्याभ्युपगन्तव्यतामाह—**प्रतीतत्वादेवेति** । तदुक्तादेवेत्येवकाराभिप्रायः—**द्वैरूप्यमपीति** । अनिष्टमपीत्य**पि**शब्दस्याभिप्रायः । प्रतीतत्वमेवोपपादयति—**न हीति** । इयं जातिरियं व्यक्तिरिति विविक्ते ह्यत्राभेदोऽत्र च भेद इति वक्तुं युक्तं, न तथा विविच्यत इत्यर्थः । तर्हि कथं प्रतीतिरित्यत्राह—**अपि त्विति** । एकमेव वस्तु जात्यात्मना व्यक्त्यात्मना च भिन्नमभिन्नं च प्रतीयत इत्यर्थः । **मृदयं घट** इत्यनेन मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययो भेदाभेदसाधकयुक्तिरुक्ता भवति । अनुवृत्तिव्यावृत्तिभ्यां विवेकं शङ्कते—**अनुवृत्तीति** । परिहरति—**नैवमिति** । विविक्ताकारानुपलब्धिं विवृणोति—**न हि सुसूक्ष्ममपीति** । विविक्ताकारोपलम्भे सति ह्यस्मिन्नंशेऽनुवृत्तिबुद्धिबोध्यत्वम्, अस्मिन्नंशे व्यावृत्तिबुद्धिबोध्यत्वमिति ज्ञातुं शक्यमित्यर्थः । **आकारभेदो**ऽशभेदः । तर्हि कथमुपलम्भ इत्यत्राह—**यथा संप्रतिपन्नेति** । **विशेषो** व्यक्तिः, यथा—कार्यैकत्वं व्यक्त्येकत्वं च संप्रतिपन्नं, तथा—कार्यकारणयोश्च जातिव्यक्त्योश्चैकत्वबुद्धिर्जायत इत्यर्थः । **एकत्वबुद्धिरि**त्यनेन **एक**शब्दानुविद्धप्रत्यय उक्तो भवति । **सहोपलम्भनियमः** प्रथमपिण्डग्रहणे अंशभेदेनाग्रहणं चार्थादुक्तं भवति; **न विवेक्तुं शक्नोती**त्युक्तेः । एवं जातिव्यक्त्योरन्योन्यं भेदाभेद उक्तः, अथ पिण्डानां परस्परभेदाभेद उच्यते—**एवमेवेति** । देशकालवैलक्षण्यं स्पष्टम् । नीलत्वखण्डत्वादिराकारवैलक्षण्यम् । **अत्यन्तभेदः** अभेदासहो भेद इत्यर्थः । अत्र चोद्यमाशङ्कते—**अथोच्येतेति** । देहात्मनोः सद्व्यात्मनैकत्वेऽभिमतेऽपि देहरूपेण, आत्मरूपेण वा तयोरैक्यस्याप्रामाणिकत्वात्—तयोर्भिन्नाभिन्नत्वमनिष्टमिति भावः । परिहरति—**तदिदमिति** । अबाधितं सामानाधिकरण्यं भेदाभेदसाधकम्, अबाधितश्च भेदाभेदस्तत्त्वमित्यजानतोक्तमित्यर्थः । तदुपपादयति—**तथा हीति** । परिहारोपयिकमर्थं शिक्षयति—**अबाधित इति** । ततः किमित्यत्राह—**देवादीति** । जातिव्यक्त्योरपि तथा स्यादित्यत्राह—**खण्ड इति** । एवं लौकिकार्थानां भेदाभेद उक्तः,

साधयति । खण्डो गौर्मुण्डो गौरिति सामानाधिकरण्यस्य न केन चित्कचिद्बाधो दृश्यते, तस्मान्नातिप्रसङ्गः । अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः, अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः, तत्राभेद एव स्वाभाविको भेदस्त्वौपाधिकः । कथमवगम्यत इति चेत्, **'तत्त्वमसि'** ( छा. ६।८।७ ), **'नान्योऽतोऽस्ति द्रष्टा'** ( बृ. ३।७।२३ ), **'अयमात्मा ब्रह्म'** ( बृ. २।५।१९ ) इत्यादिभिः श्रुतिभिः, **'ब्रह्मेमे द्यावापृथिवी'** इति प्रकृत्य **'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत । स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान् ॥'** इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्तेऽभेदश्रवणाच्च, **'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।'** ( श्वे. ६।१३ ) **'ज्ञाज्ञौ द्वावजावीशनीशौ'** ( श्वे. १।९ ), **'क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः ।'** ( श्वे. ५।१२ ) **प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ।'**( श्वे. ६।१६), **'स कारणं करणाधिपाधिपः'** ( श्वे. ६।९ ), **तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।'** ( श्वे. ४।६ ), **'य आत्मनि तिष्ठन्'** ( बृ. ३।७।२२ ), **'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्'** ( बृ. ४।३।२१ ), **'प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति'** ( बृ. ४।३।३५ ), **'तमेव विदित्वाति मृत्युमेति'** ( श्वे. ३।८ ) इत्यादिभिर्भेदश्रवणाच्च—जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ । तत्र **'ब्रह्म वेद ब्रह्मैव भवति'** (मु. ३।२।९ ) इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्, **'यत्रत्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्'** ( बृ. २।४।१४ ) इति तदानीं भेदेनेश्वरदर्शननिषेधाच्च—अभेदः स्वाभाविक इत्यवगम्यते । ननुच—**'सोऽश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता'** (तै. २।१।१) इति सहश्रुत्या तदानीमपि भेदः प्रतीयते, वक्ष्यति च—**'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च'** ( ब्र. सू. ४।४।१७ ), **'भोगमात्रसाम्यलिङ्गाच्च'** ( ब्र. सू. ४।४।२१ ) इति, नैतदेवं; **'नान्योऽतोऽस्ति द्रष्टा'** ( बृ. ३।७।२३ ) इत्यादिश्रुतिशतैरात्मभेदप्रतिषेधात् । **'सोऽश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता'** ( तै. २।१।१ ) इति सर्वैः कामैः सह ब्रह्माश्नुते, सर्वगुणान्वितं ब्रह्माश्नुत इत्युक्तं भवति; अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत । **'जगद्व्यापारवर्जम्'** ( ब्र. सू. ४।४।१७ ) इत्यत्र मुक्तस्य भेदेनावस्थाने सत्यैश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते; अन्यथा **'संपद्याविर्भावः स्वेन शब्दात्'** ( ब्र. सू. ४।४।१ )

---

तदुपजीव्य वैदिकेष्वप्यर्थेषु जीवब्रह्मणोर्भेदाभेदमाह—**अत एवेति** । अतः भेदाभेदयोरविरुद्धत्वादित्यर्थः । **ब्रह्मांशत्वेने**त्यत्रांशो **नानाव्यपदेशा**दिति सूत्रं स्मारितम् । **अचिद्ब्रह्मणोर्भेदाभेदः स्वाभाविक** इति भास्करयादवयोरुभयोरप्यभिमतं, **चिद्ब्रह्मणोस्तु भेदाभेदौ स्वाभाविका**विति यादवमतव्यावृत्त्यर्थमाह—**तत्रेति** । **कथमिति** । भेदाभेदसद्भावे, तत्राभेदस्यैव स्वाभाविकत्वे च किं प्रमाणमित्यर्थः । अभेदस्य स्वाभाविकत्वेन प्राधान्यात् प्रथम**मन्यथा चेति** सूत्रांशविषयवाक्यमाह—**तत्त्वमसीति** । **दाशकितवे**त्याद्यंशविषयमाह—**ब्रह्मेम इति** । **नानाव्यपदेशा**दित्यंशस्य विषयमाह—**नित्यो नित्यानामिति** । **क्रियागुणैरात्मगुणैश्चेति** । **क्रियागुणाः** संसारहेतुगुणाः, **आत्मगुणाः** मोक्षहेतुगुणाः, तैः संयोगहेतुभिरित्यर्थः । अत्र भेदस्यौपाधिकत्वं कथमवगम्यत इत्यत्राह—**तत्रेति** । तत्स्वरूपापत्तिव्यपदेशः, भेदनिषेधश्च अभेदस्यानौपाधिकत्वज्ञापकावित्यर्थः । मुक्तौ भेदनिषेधादेव भेदस्यौपाधिकत्वमप्यर्थसिद्धम् । मुक्तौ भेदं दर्शयंश्चोदयति—**ननु चेति** । **सह**शब्दो भोक्तृसाहित्यपर इति चोदयितुरभिप्रायः । भोग्यसाहित्यबुद्ध्या परिहरति—**नैतदिति** । भेदप्रतीतिं परिहरिष्यन्मुक्तौ भेदस्य श्रुतिविरुद्धतां दर्शयति—**नान्य इति** । भेदप्रतीतिं परिहरति—**सोऽश्नुत इति** । **सोऽश्नुत**इति वाक्येनोक्तं **भवती**त्यन्वयार्थः । **ब्रह्मणा सह गुणानश्नुते** गुणांश्च ब्रह्म चानुभवतीति । किं ब्रह्म पृथग्भूतोऽश्नुते, उतापृथग्भूत इत्यपेक्षायां तद्वाक्यान्तरावगम्यम्, अतो नात्र भेदप्रतीतिरिति भावः । एतदुपपादयति—**अन्यथेति** । अप्राधान्यं भोक्त्रन्तरापेक्षया दोषः, भोग्यभूतस्वगुणापेक्षया तु न दोष इति भावः । परोदाहृतसूत्रस्य स्वाभिमतमर्थमाह—**जगदिति** । ब्रह्मणो मुक्तस्य च भेदे सति जगद्व्यापारवर्जत्वप्रसङ्गात्—न भेद इति सूत्रार्थ इत्यर्थः । तदुपपादयति—**अन्यथेति** । अभेदस्य स्वाभाविकत्वं निगमयति—**तस्मादिति** । मुक्तौ भेदनिषेधादर्थसिद्धं

इत्यादिभिर्विरोधात् । तस्मादभेद एव स्वाभाविकः, भेदस्तु जीवानां परस्माद्ब्रह्मणः, परस्परं च बुद्धीन्द्रियदेहोपाधिकृतः । यद्यपि ब्रह्म निरवयवं सर्वगतं च तथाप्याकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदः संभवत्येव । नच—भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम्; उपाधेस्तत्संयोगस्य च कर्मकृतत्वात्, तत्प्रवाहस्य चानादित्वात् । एतदुक्तं भवति—पूर्वकर्मसंबद्धाज्जीवात्स्वसंबद्ध एवोपाधिरुत्पद्यते, तद्युक्तात्कर्म । एवं बीजाङ्कुरन्यायेन कर्मोपाधिसंबन्धस्यानादित्वान्न दोष इति । अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः । उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवद्भेदोऽपि स्वाभाविकः; उपाधीनामुपाध्यन्तराभावात्, तदभ्युपगमेऽनवस्थानाच्च । अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्त—इति । अत्रोच्यते—अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति—वेदान्तवाक्यैरभेदः प्रतीयते, भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते, भेदाभेदयोः परस्परविरोधादनाद्यविद्यामूलतयापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम् । तत्र यदुक्तं—भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोध—इति, तदयुक्तं; कस्माच्चित्कस्यचिद्विलक्षणत्वं हि तस्मात्तस्य भेदः, तद्विपरीतत्वं चाभेदः, तयोस्तथाभावातथाभावरूपयोरेकत्र संभवमनुन्मत्तः को ब्रवीति । कारणात्मना जात्यात्मना चाभेदः, कार्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदादविरोध—इति चेन्न; विकल्पासहत्वात् । आकारभेदादविरोधं वदतः किमेकस्मिन्नाकारे भेद आकारान्तरे चाभेद इत्यभिप्रायः, उताकारद्वययोगिवस्तुगतावुभावपीति । पूर्वस्मिन्कल्पे—व्यक्तिगतो भेदो जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता । जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्, तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात् । एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम् । द्वितीयेतु कल्पे—अन्योन्यविलक्षणमाकारद्वयमप्रति-

---

भेदस्य औपाधिकत्वमेवकारेणाभिप्रेतम् । उपाधिः क इत्यपेक्षायामाह—**भेदस्त्विति** । औपाधिकत्वरूपवैषम्यपरस्तुशब्दः, शङ्काद्योतको वा । ब्रह्मणो विभुत्व-निरवयवत्वाभ्यां जीवगत उपाधिर्ब्रह्मण्येवेति—तदसंसृष्टप्रदेशाभावात्—जीवेश्वरभेदो न संभवतीत्यत्राह—**यद्यपीति** । अन्योन्याश्रयमाशङ्क्याह—**न चेति** । ईश्वरांशे कर्मकृतबुद्ध्युपाधिसंबन्धाभावात्—उपाधिसंयोगस्य भेदपूर्वकत्वम् । प्रवाहानादितया परिहरति—**उपाधेरिति** । कथमुपाधितत्संयोगकर्मणां प्रवाहानादित्वं, तेन चान्योन्याश्रयपरिहारः कथमिति शङ्कायां तद्विवृणोति—**एतदुक्तमिति** । **तद्युक्तात्कर्मेति** । कर्मवश्यत्वं हि जीवत्वम् । उपाधिना जीवत्वं, जीवभावादुपाध्यन्तरमित्यनादिरित्यर्थः । फलितमर्थमाह—**अत इति** । अचिदंशे वैषम्यमाह—**उपाधीनां पुनरिति** । **पुनस्त्वर्थः** । वैषम्ये हेतुद्वयमाह—**उपाधीनामिति** । भिन्नाभिन्नत्वपक्षमुपसंहरति—**अतो जीवकर्मेति** । **इति ध्याननियोगवादिन उपरि भास्करेण प्रत्यवस्थानम्** ॥

अथ भेदाभेदपक्षं ध्याननियोगवादी दूषयति—**अत्रोच्यत इत्यादिना** । पूर्वं **यदपि कैश्चिदुक्त**मिति प्रक्रान्तस्य पक्षस्योत्थापकं सङ्गतिस्थलं दर्शयितुमाह—**अद्वितीयेति** । तत्सङ्गतिस्थलं दर्शयति—**तत्र यदुक्तमिति** । भेदाभेदविषयप्रतीतिं दूषयिष्यन् पूर्वं तयोर्विरोधमुपपादयितुं तत्स्वरूपमाह—**कस्माच्चिदिति** । **विलक्षणत्व**मन्यत्वम् । इदमिदं न भवति, इदमिदं भवतीति हि भेदाभेदविषयप्रतीतिः । ततः किमित्यत्राह—**तयोरिति** । **भेदाभेद** इति न कस्यचिद्धर्मस्य संज्ञा, लोकप्रसिद्ध्यनुगुणोऽर्थो **भेदाभेद**शब्दस्य स्वीकृतश्चेत्, भावाभावयोर्विरोधोऽवर्जनीय इत्यर्थः । किंच—अनेन क्वचिदपि विरोधो नास्तीति वक्तुं न शक्यम्; त्रिविधविरोधोपलब्धेः । यदि भावाभावयोर्न विरोधः, तर्हि भिन्नाभिन्नत्वं भवति, न भवतीति स्वपरवचसोरपि विरोधाभावः स्यात् । परोक्तं पिण्डद्वयभेदाभेदस्याकारभेदादविरोधमनुवदति—**कारणात्मनेति** । विकल्प्य दूषयति—**नेत्यादिना** । **एकस्मिन्नाकार** इति **आकार**शब्दः पदार्थपरः । पूर्वस्मिन्कल्प इति । तत्र जातिव्यक्त्योः किं परस्परं भेदः, उत भेदाभेद—इति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति—**व्यक्तिगत इति** । द्वितीयमनुवदति—**जातिरिति** । दूषयति—**तर्हीति** । विरोधस्तिष्ठत्येवेत्यर्थः । तृतीयं दूषयति—**एकस्मिंश्चेति** । जातिर्व्यक्तिर्भवति न भवतीति भावाभावविरोधः स्थित एवेत्यर्थः । कण्ठोक्तपूर्वकल्पे द्वितीयं शिरो दूषयति—**द्वितीये तु कल्प इति** । अत्र तृतीयस्य जातिव्यक्तिव्यतिरिक्तस्य वस्तुनोऽप्रतिपन्नत्वं नामैकं दूषणमधिकं **तदिदमप्रतिपन्नं चे**त्य-

पन्नं च तदाश्रयभूतं वस्त्विति त्रितयाभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यान्न पुनरभेदः । आकारद्वयनिरूह्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत्, स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन्विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत्, अविलक्षणं तु कथंतराम् । आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयानवस्था स्यात् । नच संप्रतिपन्नैक्यव्यक्तिप्रतीतिवत्ससामान्येपि वस्तुन्येकरूपा प्रतीतिरुपजायते; यत 'इदमित्थ'मिति सर्वत्र प्रकारप्रकारितयैव सर्वा प्रतीतिः, तत्र प्रकारांशो जातिः प्रकार्यंशो व्यक्तिरिति नैकाकारप्रतीतिः । अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न संभवति । तस्मादभेदस्यानन्यथासिद्धशास्त्रमूलत्वादनाद्यविद्यामूल एव भेदप्रत्ययः । ननु— एवं ब्रह्मण एवाज्ञत्वं तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःष्युः, ततश्च **'यः सर्वज्ञः सर्ववित्'** ( मु. १।१।९ ), **'एष आत्माऽपहतपाप्मा'** ( छा० ८।१।५ ) इत्यादीनि शास्त्राणि बाध्येरन्, नैवम्; अज्ञत्वादिदोषाणामपरमार्थत्वात् । भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गस्तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः । न हि ब्रह्माणि निरवयवेऽच्छेद्ये संबध्यमाना उपाधयस्तच्छित्त्वा भित्त्वा वा संबध्यन्ते, अपितु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति । यदि मन्वीत—उपाध्युपहितं ब्रह्म जीवः, स चाणुपरिमाणः, अणुत्वं चावच्छेदकस्य मनसोऽणुत्वात्,

---

नेनाभिप्रेतम् । प्रतिपन्नत्वाभ्युपगमेऽपि दूषणमाह—**तृतीयाभ्युपगमेऽपीति । न पुनरिति ।** अन्यथा त्रित्वाभावादित्यर्थः । अथ तृतीये वस्तुन्याकारद्वयेन भेदाभेदयोर्निर्वाह्यत्वेनाविरोधित्वं शङ्कते—**आकारद्वयेति ।** इदमाकारद्वयं किं—स्वाश्रयेण भिन्नम्, उताभिन्नम्, उत भिन्नाभिन्नम्—इति विकल्पत्रयमभिप्रेत्य, प्रथमं शिरो दूषयति—**स्वस्मादिति । स्व**शब्दत्रयमप्याश्रयपरं; भेदाभेदयोरेकाश्रयत्वेन हि विरोधः । अविरोधनिर्वाहकाकारद्वयं हि न भेदाभेदयोराश्रयभूतम्, अतो न तद्विरोधनिर्वाहकम् । अग्निगतं पैङ्गल्यमौज्वल्यं चाकारद्वयमग्नौ शीतोष्णत्वरूपविरुद्धधर्मद्वयसमावेशनिर्वाहकं न भवतीत्यर्थः । द्वितीयं शिरो दूषयति—**अविलक्षणमिति ।** पूर्वमाकारद्वये संभवति तस्य विरुद्धधर्मद्वयनिर्वाहकत्वायोग उक्तः, अत्र तु आकारद्वयमेव नास्तीति नितरां विरुद्धधर्मसमावेशायोग इत्यभिप्रायेण **कथंतरा**मित्युक्तम् । तृतीयं शिरो दूषयति—**आकारद्वयतद्वतोरिति ।** आकारद्वयस्य, तदाश्रयस्य च भिन्नाभिन्नत्वनिर्वाहकमाकारद्वयान्तरमपेक्षितं, तस्यापि स्वाश्रयेण भिन्नाभिन्नत्वमस्ति चेत्तदविरोधनिर्वाहकाकारद्वयान्तरमपेक्षितम्—इत्यनवस्था स्यादित्यर्थः । अथ किं दृष्टेऽनुपपन्नं नामेति शङ्कायां भेदाभेदविषयां प्रतीतिं दूषयति—**न चेति ।** हेतुमाह—**यत इति ।** तस्यां प्रतीतौ प्रकारप्रकारिणौ विविच्य दर्शयति—**तत्रेति ।** अनेनेदमपि परिहृतं—मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यं, सहोपलम्भनियमः, एकशब्दानुविद्धप्रत्ययः, प्रथमपिण्डग्रहणे जातिव्यक्त्योरभेदेन प्रतीतिश्चेति हेतुचतुष्टयम् । **अपृथक्सिद्ध**विशेषणत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुः । **अपृथक्सिद्धिश्च** प्रकारप्रकारिणोः संबन्धनियमादेवोपपन्ना, अतः प्रकारप्रकारिभावप्रतिपन्नभेदविरुद्धाभेदकल्पनाया अनवकाशः, संबन्धनियम एव सहोपलम्भनियमहेतुश्च । 'एकोऽयं गौ'रिति प्रत्ययोऽप्येकोऽयं दण्डी'तिवद्विशेष्यैक्यविषयः, न तु विशेषणविशेष्यैक्यविषयः । प्रथमपिण्डग्रहणेऽपि प्रकारप्रकारिभावात्—भेदेनैव प्रतीतिः । किंच—सहत्वमपि भेदसाधकं; द्वयोरेव हि साहित्यं, सहोपलम्भनियमश्च संप्रतिपन्ने भिन्ने अभिन्ने च न दृष्ट इति असाधारणानैकान्तिकत्वात्—नोभयसाधकः । भिन्नेष्वभिन्नेषु चादृष्टस्य भेदाभेदसाधकत्वेऽभ्युपगम्यमाने—नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं गन्धवत्त्वं पृथिव्या नित्यत्वानित्यत्वसाधकं स्यात् । किंच—साधननियमः साध्यनियमहेतुरिति—सहत्वनियमो भेदनियमहेतुरेव । 'अत्र जातिरत्र व्यक्ति'रिति प्रदेशभेदाग्रहणं जातेः पिण्डे व्याप्यवृत्तित्वात् । तच्च सहोपलम्भनियमान्तर्गतं; देशतः कालतश्चोपलम्भनियमो हि सहोपलम्भनियमः, अतो देशतः कालतश्च संबन्धनियमकृतः सहोपलम्भनियमः । किंच—सहोपलम्भनियमोऽसिद्धः; 'इदं रजत'मित्यत्र शुक्तित्वजातिव्यतिरेकेणाधिष्ठानभूतव्यक्तिप्रतीतेः, अतो नैक्यसाधकमिति—लौकिकवस्तुनि भेदाभेदयोर्विरुद्धत्वमुपजीव्य वैदिकेऽपि तत्सद्भावमाह—**अत एवेति ।** भेदाभेदयोर्विरोधेनैकस्मिन्वस्तुनि तयोरनुपपन्नत्वादित्यर्थः । भेदाभेदनिरासमुपजीव्याभेदस्यैव तात्त्विकतामाह—**तस्मादिति ।** दोषसंबन्धमुखेन चोदयति—**नन्विति ।** अपरमार्थतया परिहरति—**नैवमिति ।** परोक्तदोषः परस्यैवेत्याह—**भवतस्त्विति ।** तदुपपादयति—**न हि ब्रह्मणीति ।** अङ्गुल्यादेरिव छेदो न संभवतीत्य**च्छेद्यत्वं** ब्रह्मणः, तत्र हेतुर्निरवयवत्वम् । **भित्त्वा** अच्छिन्नत्वेऽपि पाणिपादादिवत्प्रतिनियतप्रदेशभेदेनेत्यर्थः । प्रदेशभेदेन, छेदनेन वा ब्रह्मणि संबन्धमुपाधयो नार्हन्ति; निरवयवत्वात्, अच्छेद्यत्वाच्चेत्यर्थः । निरवयवत्वेऽप्यच्छेद्यत्वेऽपि गगनवदुपहितानुपहितांशभेदेन सदोषत्वनिर्दोषत्वोपपत्तिं शङ्कते—**यदि मन्वीतेति ।** उपाध्यवच्छेदाज्जीवभावः, जीवभावादुपाध्यवच्छेदः; कर्मणा जीवभावः, तस्मात्कर्म—इति

स चावच्छेद्कोऽनादिः, एवमुपाध्युपहिते देशे संबध्यमाना दोषा अनुपहिते परे ब्रह्मणि न संबध्यन्त— इति । अयं प्रष्टव्यः—१ किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः, २ उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, ३ उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्, ४ अथोपाधिसंयुक्तं चेतनान्तरम्, ५ अथोपाधिरेवेति । अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्पते । आदिमत्त्वं च जीवस्य स्यात् । एकस्य सतो द्वैधीकरणं हि च्छेदनम् । द्वितीये तु कल्पे—ब्रह्मण एव प्रदेशविशेष उपाधिसंबन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः । उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात्क्षणे क्षणे बन्धमोक्षौ च स्याताम् । आकर्षणे च—अच्छिन्नत्वात्कृत्स्नस्य ब्रह्मण आकर्षणं स्यात् । निरंशस्य व्यापिन आकर्षणं न संभवतीति चेत्, तर्ह्युपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात् । अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसंधानं स्यात् । प्रदेशभेदादप्रतिसंधाने च—एकस्यापि स्वोपाधौ गच्छति प्रतिसंधानं न स्यात् । तृतीये तु कल्पे—ब्रह्मस्वरूपस्यैवोपाधिसंबन्धेन जीवत्वापातात्तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात् । सर्वेषु च देहेष्वेक एव जीवः स्यात् । तुरीये तु कल्पे—ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात् । चरमे—चार्वाकपक्ष एव परिगृहीतः स्यात् । तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम् । अतः प्रवृत्तिनिवृत्तिरूपप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति । तदप्ययुक्तम्; ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात् । एतदुक्तं भवति—ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते, उत स्वतन्त्राण्येव । एकवाक्यत्वे—ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न संभवति । भिन्नवाक्यत्वे—प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादनवबोधकत्वमेव । नच वाच्यं—ध्यानं नाम स्मृतिसंततिरूपं, तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेः स्मर्तव्यविशेषाकाङ्क्षायाम्—**'इदं सर्वं यदयमात्मा'** ( बृ. २।४।६ ), **'अयमात्मा ब्रह्म सर्वानुभूः'** ( बृ. २।५।१९ ), **'सत्यं ज्ञानमनन्तं ब्रह्म'** ( तै. २।१।१ ) इत्यादीनि, स्वरूपतद्विशेषादीनि समर्पयन्ति, तेनैकवाक्य-

---

चान्योन्याश्रयपरिहारायानादिरित्युक्तम् । दूषयितुमाह—**अयं प्रष्टव्य इति** । विकल्पयति—**किमिति** । श्रुतावणुशब्दस्य सूक्ष्मपरत्वाभिप्रायसंभवात् तृतीयकल्पोदयः । चतुर्थपञ्चमौ कल्पावाभ्यां विकल्पाभ्यां विना गतिर्नास्तीत्यभिप्रायेण कृतौ, न तु पराभ्युपगत्या । ब्रह्मशब्दस्य जीवेऽप्युपचारवृत्तेः—चतुर्थकल्पः । उपाधिब्रह्मणोर्भिन्नाभिन्नत्वाभ्युपगमात्—पञ्चमः । प्रथमं शिरो दूषयति—**अच्छेद्यत्वादिति** । दूषणान्तरमाह—**आदिमत्त्वमिति** । तदुपपादयति—**एकस्य सत इति** । द्वितीयं दूषयति—**द्वितीये त्विति** । दूषणान्तरमाह—**उपाधाविति** । आकर्षणेन विना तत्परिहारासंभवात् तदाशङ्क्याह—**आकर्षणे चेति** । अनुपपत्त्या तदनभ्युपगममाशङ्क्य पूर्वोक्तदूषणेन व्युदस्यति—**निरंशस्येति** । दूषणान्तरमाह—**अच्छिन्नेति** । तत्परिहारमाशङ्क्याह—**प्रदेशभेदादिति** । तृतीयं शिरो दूषयति—**तृतीये त्विति** । **अनुपहितब्रह्मासिद्धिः स्यादिति** । निर्दोषमङ्गलगुणकत्वश्रुतीनामनुपहितब्रह्मविषयत्वं हि पराभ्युपेतम् । जीवेश्वरभेदाभावप्रसङ्गः, जीवानां परस्परभेदाभावप्रसङ्गश्चेत्यर्थः । चतुर्थपञ्चमौ दूषयति—**तुरीये त्वित्यादिना** । **चरम इति** । अचिद्द्रव्यस्यैव चेतनत्ववचनात्—तस्य चेतनब्रह्मतादात्म्यानुपपत्तिश्चेत्यभिप्रायः । भेदाभेददूषणमुपसंहरन्स्वमतसिद्धिमाह—**तस्मादिति** । ध्यानविधिशेषतया ब्रह्मणः सिद्धिमुपसंहरति—**अत इति** । **इति ध्याननियोगवादिना भास्करमततिरस्कारः** ॥

ध्याननियोगवादिपक्षं मीमांसको दूषयति—**तदप्ययुक्तमिति** । न केवलं निष्प्रपञ्चीकरणविधिवाद एवानुपपन्नः, इदमपि मतमनुपपन्नमित्यपिशब्दस्य भावः । कुत इत्यत्राह—**ध्यानेति** । ध्यानविधिशेषत्वे कथमर्थसत्यत्वे तात्पर्यायोगः विधिशेषत्वं हित्वा स्वातन्त्र्येण वा ब्रह्मणि प्रामाण्यं स्यादित्याह—**एतदुक्तमिति** । दूषयितुं विकल्पयति—**ब्रह्मस्वरूपेति** । प्रथमं शिरो दूषयति—**एकेति** । **एकवाक्यत्वं** महावाक्यैकत्वम् । द्वितीयं दूषयति—**भिन्नेति** । **अनवबोधकत्वं** दुःखसाध्यश्रवणादौ प्रवृत्त्ययोगात् । एकवाक्यत्वपक्षे विधिशेषतया ब्रह्मणः सिद्धिमाशङ्क्याह—**नच वाच्यमिति** । कुत इत्यत्राह—**ध्यानविधेरिति** । **नाम ब्रह्मेत्युपासीत**ेत्यादिषु दृष्टिविधिषु विशेष्यसत्यत्वेऽपि विशेषणासत्यत्वेन—विशि-

तामापन्नान्यर्थसद्भावे प्रमाणमिति; ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि **'नाम ब्रह्मेत्युपासीत'** (छा. ३।१८।१) इत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेर्ध्येयसत्यत्वानपेक्षणात् । अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वाद्ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात्स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवज्ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावाद्ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति प्राप्तम् । तत्र प्रतिपद्यते—**तत्तु समन्वयादिति** । **समन्वयः** सम्यगन्वयः पुरुषार्थतयान्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयान्वयात्तच्छास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः । निरस्तनिखिलदोषगन्धनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन्वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते । एतदुक्तं भवति—अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वरूपावबोधानां देवासुरगन्धर्वसिद्धविद्याधरकिंनरकिंपुरुषयक्षरक्षःपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां, मुक्तानां, स्वस्य चाविशेषेणानुभवसंभवे स्वरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजनकं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि, प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि । एवंभूतं परं ब्रह्म कथं प्राप्यत इत्यपेक्षायां—**'ब्रह्मविदाप्नोति परम्'** ( तै. २।१।१ ), **'आत्मानमेव लोकमुपासीत'** (बृ. १।४।१५)

---

ष्यासत्यत्वमवर्जनीयम्, इह च तथैवेत्यर्थः । सार्थसंग्रहं पूर्वपक्षमुपसंहरति—**अत इति** । ननु—प्रथमसूत्रे विधिशेषतया ब्रह्मणि प्रामाण्यसमर्थनम्, एतदधिकरणपूर्वपक्षे विधिशेषतया तत्सिद्धिप्रतिक्षेपश्च कथं घटते, इत्थं—तत्र हि फलत्वेन सिद्धिरुक्ता, फलतया सिध्यतः पारमार्थ्याभावे स्वर्गादेरप्यसत्यत्वप्रसङ्गात्—तत्पारमार्थ्यं सिध्यतीति—फलतया तत्सिद्धिसमर्थनं साधीयः, अत्र तु ध्यानविधिकर्मत्वेन तत्सिद्धिर्व्युदस्ता, न तु फलतया तत्सिद्धिरित्यविरोधः । एवमुपन्यस्तं पूर्वपक्षमभिप्रेत्य सूत्रकारेणैवैतत्सूत्रं प्रणीतमित्यत्राह—**तत्रेति** । **प्रतिपद्यते** सिद्धान्तः प्राप्नोति, ज्ञायत इति वार्थः । **समन्वय**शब्दं विस्तरेण व्याचष्टे—**समन्वय इत्यादिना** । कस्य केनान्वयः इत्यपेक्षां पूरयन् वाक्यार्थं योजयति—**परमेति** । परमपुरुषार्थत्वोपपादक**मनवधिके**ति पदम् । पुरुषेणार्थ्यत्वं हि **पुरुषार्थत्वम्** । आनन्दरूपतया पुरुषार्थत्वं, तस्यानवधिकातिशयत्वात्—परमपुरुषार्थत्वमिति भावः । स्वयमननुकूलस्य सुखसाधनस्यापि पुरुषार्थत्वमस्तीति तद्व्यावृत्तिश्चा**नवधिके**त्यादिपदेन सिद्धा । तच्छब्दं व्याचष्टे—**शास्त्रप्रमाणकत्वमिति** । पूर्वपक्षव्यावर्तक**तु**शब्दलब्धमर्थमाह—**सिध्यत्येवेति** । तत्त्वमस्यादिस्वरूपोपदेशपरवाक्यार्थज्ञानमात्रेणाविद्यानिवृत्तिं, तन्मुखेन वाक्यस्य प्रयोजनपर्यवसानं च वदतो मृषावादिनो ध्यानविध्यानर्थक्यं स्यात्; वाक्यार्थज्ञानोपयोगित्वस्य दूषितत्वात्, मीमांसकपक्षे ब्रह्मणोऽसिद्धिः—इत्युभयविधदोषास्पृष्टेनाकारेण वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमुपपिपादयिषुस्तत्र प्रथमं ब्रह्मणः स्वतः सर्वेषां सर्वप्रकारभोग्यत्वेन पुरुषार्थत्वाधिक्यं, प्रवृत्तिनिवृत्त्योर्दुःखात्मकत्वेन पुरुषार्थत्ववैकल्यं चाभिप्रयन् प्रवृत्तिनिवृत्तिपरत्वविरहवतः पुरुषार्थत्वपर्यवसानाभावनिबन्धनामप्रामाण्यशङ्कां परिहरति—**निरस्तेति** । **राजकुलवासी** राजकुलप्रसूतः, राजकुलान्तरज्ञो वा । **कौलेयकाः** श्वानः, श्वोपजीविनो म्लेच्छा वा लक्ष्यन्ते । यद्यपि—वाक्यगणस्थाने राजकुलवासी पुरुषः प्रतीयते, तथापि—अर्थवशाद्वाक्यार्थप्रतिपत्तृपुरुषस्थाने तन्निर्देशः फलितः । स्वतोनिरवधिकपुरुषार्थपरवाक्यस्य प्रयोजनशून्यत्वकथनमनुपपन्नमित्यर्थः । ब्रह्मणः कथमनवधिकानन्दरूपतया पुरुषार्थत्वाधिक्यं, कथं च प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यं, स्वरूपपरवाक्यस्य पुरुषार्थपर्यवसानं कुत्र दृष्टं, तथा सति कथं ध्यानविधिसाफल्यमित्याकाङ्क्षायामाह—**एतदुक्तमिति** । ब्रह्मणः पुरुषार्थताधिक्यमाह—**अनादीत्यादिना** । कर्मभिरनुभवप्रतिबन्धात्—क्षेत्रज्ञानां तस्य पुरुषार्थत्वज्ञानाभावः, न तु तत्र तद्वैकल्यादित्यभिप्रायेणोक्तम्—**अनादिकर्मेति** । **देवासुरा**दिपरिगणनं तेषां व्यवस्थितभोग्यत्वप्रदर्शनार्थम् । योग्यानुपलब्धिशङ्काव्युदासाया**नुभवसंभव** इत्युक्तम् । तद्विषयज्ञानानुकूलत्वं हि तदनुकूलत्वेन विना न संभवति, अतो**ऽनवधिकातिशयानन्दजनकत्वो**क्त्या ब्रह्मणोऽनवधिकातिशयानुकूलत्वं सिध्यतीत्यानन्दत्वमुपपादितं भवति ॥ **स्वरूपे**त्यादिना सर्वप्रकारभोग्यत्वमुक्तं, तेन पुरुषार्थत्वाधिक्यं सिद्धम् । **प्रवृत्ती**त्यादिना प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यमुक्तम् । इष्टसुखलवसाधनस्याप्युपादेयत्वात्, दुःखात्मकतया स्वतोभोग्यत्वाभावाच्च ध्यानादिविध्यानर्थक्यं परिहरति—**एवं भूतमिति** । परोक्षज्ञानस्यापि सुखरूपत्वात्—स्वरूपपराणि वाक्यानि पुरुषार्थपर्यवसायीन्येव । तदापरोक्ष्याकाङ्क्षिणस्तत्साधनज्ञापकत्वात्—ध्यानविधायकानि

